तीव्रसंवेगानामासन्नः ॥1.21 ॥
मृदुमध्याधिमात्रत्वात् ततोऽपि विशेषः ॥1.22 ॥
ईश्वरप्रणिधानाद्वा ॥1.23 ॥
क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥1.24 ॥
तत्र निरतिशयं सर्वज्ञबीजम् ॥1.25 ॥
स पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥1.26 ॥
तस्य वाचकः प्रणवः ॥1.27 ॥
तज्जपस्तदर्थभावनम् ॥1.28 ॥
ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥1.29 ॥
व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थित त्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥1.30 ॥
दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासाविक्षेपसहभुवः ॥1.31 ॥
तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥1.32 ॥
मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥1.33 ॥
प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥1.34 ॥
विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धिनी ॥1.35 ॥
विशोका वा ज्योतिष्मती ॥1.36 ॥
वीतरागविषयं वा चित्तम् ॥1.37 ॥
स्वप्ननिद्राज्ञानालम्बनं वा ॥1.38 ॥
यथाभिमतध्यानाद्वा ॥1.39 ॥
परमाणु परममहत्त्वान्तोऽस्य वशीकारः ॥1.40 ॥
क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ॥1.41 ॥
तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः ॥1.42 ॥
स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥1.43 ॥
एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥1.44 ॥
सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ॥1.45 ॥
ता एव सबीजः समाधिः ॥1.46 ॥
निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥1.47 ॥
ऋतम्भरा तत्र प्रज्ञा ॥1.48 ॥
श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥1.49 ॥
तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥1.50 ॥
तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥1.51 ॥
**॥इति पतञ्जलि-विरचिते योग-सूत्रे प्रथमः समाधि-पादः ॥**

## ॥द्वितीयोऽध्यायः ॥

### ॥साधन-पादः ॥

तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥2.1 ॥
समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥2.2 ॥
अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः ॥2.3 ॥
अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥2.4 ॥
अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥2.5 ॥
दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥2.6 ॥
सुखानुशयी रागः ॥2.7 ॥
दुःखानुशयी द्वेषः ॥2.8 ॥
स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः ॥2.9 ॥
ते प्रतिप्रसवहेयाः सूक्ष्माः ॥2.10 ॥
ध्यानहेयास्तद्वृत्तयः ॥2.11 ॥
क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥2.12 ॥
सति मूले तद्विपाको जात्यायुर्भोगाः ॥2.13 ॥
ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥2.14 ॥
परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥2.15 ॥
हेयं दुःखमनागतम् ॥2.16 ॥
द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥2.17 ॥
प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥2.18 ॥
विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥2.19 ॥
द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥2.20 ॥
तदर्थ एव दृश्यस्यात्मा ॥2.21 ॥
कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥2.22 ॥
स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥2.23 ॥
तस्य हेतुरविद्या ॥2.24 ॥
तदभावात् संयोगाभावो हानं तद्दृशेः कैवल्यम् ॥2.25 ॥
विवेकख्यातिरविप्लवा हानोपायः ॥2.26 ॥
तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥2.27 ॥
योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥2.28 ॥
यमनियमासनप्राणायामप्रत्याहारधारणाध्यान-समाधयोऽष्टावङ्गानि ॥2.29 ॥
अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ॥2.30 ॥
जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥2.31 ॥
शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥2.32 ॥
वितर्कबाधने प्रतिपक्षभावनम् ॥2.33 ॥
वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥2.34 ॥
अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ॥2.35 ॥
सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥2.36 ॥
अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥2.37 ॥
ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ॥2.38 ॥
अपरिग्रहस्थैर्ये जन्मकथंतासम्बोधः ॥2.39 ॥
शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः ॥2.40 ॥
सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शन-योग्यत्वानि च ॥2.41 ॥
संतोषादनुत्तमसुखलाभः ॥2.42 ॥
कायेन्द्रियसिद्धिरशुद्धिक्षयात् तपसः ॥2.43 ॥
स्वाध्यायाद् इष्टदेवतासंप्रयोगः ॥2.44 ॥
समाधिसिद्धिरीश्वरप्रणिधानात् ॥2.45 ॥
स्थिरसुखम् आसनम् ॥2.46 ॥

प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥2.47॥
ततो द्वन्द्वानभिघातः ॥2.48॥
तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥2.49॥
बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः ॥2.50॥
बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥2.51॥
ततः क्षीयते प्रकाशावरणम् ॥2.52॥
धारणासु च योग्यता मनसः ॥2.53॥
स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥2.54॥
ततः परमावश्यतेन्द्रियाणाम् ॥2.55॥
**॥इति पतञ्जलि-विरचिते योग-सूत्रे द्वितीयः साधन-पादः ॥**

## ॥तृतीयोऽध्यायः॥

### ॥विभूति-पादः॥

देशबन्धश्चित्तस्य धारणा ॥3.1॥
तत्र प्रत्ययैकतानता ध्यानम् ॥3.2॥
तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥3.3॥
त्रयमेकत्र संयमः ॥3.4॥
तज्जयात्प्रज्ञालोकः ॥3.5॥
तस्य भूमिषु विनियोगः ॥3.6॥
त्रयमन्तरङ्गं पूर्वेभ्यः ॥3.7॥
तदपि बहिरङ्गं निर्बीजस्य ॥3.8॥
व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ
निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥3.9॥
तस्य प्रशान्तवाहिता संस्कारात् ॥3.10॥
सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥3.11॥
ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः ॥3.12॥
एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ॥3.13॥
शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥3.14॥
क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥3.15॥
परिणामत्रयसंयमाद् अतीतानागतज्ञानम् ॥3.16॥
शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभाग-
संयमात्सर्वभूतरुतज्ञानम् ॥3.17॥
संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम् ॥3.18॥
प्रत्ययस्य परचित्तज्ञानम् ॥3.19॥
न च तत्सालम्बनं तस्याविषयीभूतत्वात् ॥3.20॥
कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भेचक्षुःप्रकाशासंप्रयोगेऽन्तर्धानम् ॥3.21॥
सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो
वा ॥3.22॥
मैत्र्यादिषु बलानि ॥3.23॥
बलेषु हस्तिबलादीनि ॥3.24॥
प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् ॥3.25॥
भुवनज्ञानं सूर्ये संयमात् ॥3.26॥
चन्द्रे ताराव्यूहज्ञानम् ॥3.27॥
ध्रुवे तद्गतिज्ञानम् ॥3.28॥
नाभिचक्रे कायव्यूहज्ञानम् ॥3.29॥
कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥3.30॥
कूर्मनाड्यां स्थैर्यम् ॥3.31॥
मूर्धज्योतिषि सिद्धदर्शनम् ॥3.32॥
प्रातिभाद्वा सर्वम् ॥3.33॥
हृदये चित्तसंवित् ॥3.34॥
सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः
परार्थान्यस्वार्थसंयमात्पुरुषज्ञानम् ॥3.35॥
ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते ॥3.36॥
ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥3.37॥
बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥3.38॥
उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥3.39॥
समानजयाज्वलनम् ॥3.40॥
श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम् ॥3.41॥
कायाकाशयोः सम्बन्धसंयमाल्लघुतूल-
समापत्तेश्चाकाशगमनम् ॥3.42॥
बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥3.43॥
स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥3.44॥
ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च ॥3.45॥
रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् ॥3.46॥
ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥3.47॥
ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥3.48॥
सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं
सर्वज्ञातृत्वं च ॥3.49॥
तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥3.50॥
स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ॥3.51॥
क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥3.52॥
जातिलक्षणदेशैरन्यतानवच्छेदात् तुल्ययोस्ततः प्रतिपत्तिः ॥3.53॥
तारकं सर्वविषयं सर्वथाविषयम् अक्रमं चेति विवेकजं ज्ञानम् ॥3.54॥
सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥3.55॥
**॥इति पतञ्जलि-विरचिते योग-सूत्रे तृतीयो विभूति-पादः ॥**

## ॥चतुर्थोऽध्यायः॥

### ॥कैवल्य-पादः॥

जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥4.1॥
जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥4.2॥
निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥4.3॥
निर्माणचित्तान्यस्मितामात्रात् ॥4.4॥
प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥4.5॥
तत्र ध्यानजमनाशयम् ॥4.6॥
कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥4.7॥
ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥4.8॥

जातिदेशकालव्यवहितानामप्यानन्तर्यं
स्मृतिसंस्कारयोरेकरूपत्वात् ॥4.9॥
तासामनादित्वं चाशिषो नित्यत्वात् ॥4.10॥
हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥4.11॥
अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम् ॥4.12॥
ते व्यक्तसूक्ष्मा गुणात्मानः ॥4.13॥
परिणामैकत्वाद्वस्तुतत्त्वम् ॥4.14॥
वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः ॥4.15॥
न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् ॥4.16॥
तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥4.17॥
सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात् ॥4.18॥
न तत्स्वाभासं दृश्यत्वात् ॥4.19॥
एकसमये चोभयानवधारणम् ॥4.20॥
चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ॥4.21॥
चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥4.22॥
द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥4.23॥
तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् ॥4.24॥
विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ॥4.25॥
तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥4.26॥
तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥4.27॥
हानमेषां क्लेशवदुक्तम् ॥4.28॥
प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥4.29॥
ततः क्लेशकर्मनिवृत्तिः ॥4.30॥
तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥4.31॥
ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥4.32॥
क्षणप्रतियोगी परिणामापरान्तनिग्राह्यः क्रमः ॥4.33॥
पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं-
स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥4.34॥
**॥इति पतञ्जलि-विरचिते योग-सूत्रे चतुर्थः कैवल्य-पादः ॥**

### योग शब्द व्युत्पत्ति एवं अर्थ-

'युज' धातु से 'घञ्' प्रत्यय करने से योग शब्द निष्पन्न होता है। युज्+घञ्=योग (युज् समाधौ)। योग दुःख की निवृत्ति कराने वाला है। गीता में भी कहा है-

**"तं विद्याद् दुःख संयोगवियोगं योगसंज्ञितम्" ॥ (गीता,6/23)**

अर्थात् जो दुःखरूप संसार के संयोग से रहित है उसी का नाम योग है। **"योगः समाधिः स च सार्वभौमश्चित्तस्य धर्मः"**। योग समाधि है और यह समाधि चित्त की भूमियों में रहने वाला चित्त का धर्म है।

**योगश्चित्तवृत्तिनिरोधः**। चित्तवृत्तियों का निरोध योग है। चित्त **प्रकाशशील**, **चेष्टाशील** एवं **स्थैर्यशील** होने से 'त्रिगुणात्मक' है। **"चित्तशब्देनान्तः करणं बुद्धिमुपलक्षयति"** (तत्त्व वैशारदी)

### योग-

युज् धातु तीन गणों में पायी जाती है- **युज्+घञ्** =

युज-समाधौ - दिवादिगण (आत्मनेपदी)- समाधि
युजिर्-योगे - रुधादिगण (उभयपदी)- जोड़
युज-संयमने - चुरादिगण (परस्मैपदी) - संयमन

संस्कृत-वाङ्मय में इन तीनों अर्थों वाले योग व शब्दों का प्रयोग होता रहा है। सांख्ययोगशास्त्र के योग शब्द का अभीष्ट अर्थ समाधि अर्थात् चित्तवृत्ति का निरोध ही स्वीकार किया गया है।

## ॥अथ योगानुशासनम् ॥

यहाँ पर 'अथ' शब्द **'अधिकारार्थ'** है। योग का अर्थ **समाधि है, और** वह चित्त का सार्वभौम धर्म है। अर्थात् चित्त की सभी **भूमियों में समाधि** हो सकती है।

## ॥चित्तभूमियां॥

**क्षिप्तं, मूढं, विक्षिप्तम्, एकाग्रं, निरुद्धमिति चित्तभूमयः ।**
**चित्तभूमियां** = (5)

1. क्षिप्त, 2.मूढ़, 3.विक्षिप्त, 4.एकाग्र, 5.निरुद्ध ।

1. **क्षिप्त**- "रजसा विषयेषु एव वृत्तिमत्"।
2. **मूढ**- "तमसा निद्रादिवृत्तिमत्" ।
3. **विक्षिप्तम्**- "क्षिप्ताद्विशिष्टं विक्षिप्तं सत्वाधिक्येन समादधदपि चित्तं रजोमात्रयाऽन्तरा विषयान्तरवृत्तिमत्"।
4. **एकाग्रम्**- "एकस्मिन्नेव विषयेऽग्रे शिखायस्य चित्तदीपस्य इति एकाग्रम्"।
5. **निरुद्ध**- "निरुद्धं च निरुद्धसकलवृत्तिकं संस्कारमात्रशेषमित्यर्थः"।

### चित्त-

**"चित्तशब्देनाऽत्र अन्तःकरणं बुद्धिमुपलक्षयति"**।

चित्त शब्द से यहां पर **'अन्तःकरण'** और **'बुद्धि'** को लक्षित किया गया है। चित्त की इन पांचों भूमियों में रहने वाला धर्म चित्त का सार्वभौम धर्म कहलाता है। इन भूमियों में से विक्षिप्त भूमि वाले चित्त की समाधि विक्षेप के कारण गौण हो जाने से योग की कोटि में नहीं आती। जो समाधि एकाग्र भूमि वाले चित्त में सम्भव होती हैं, तथा (आलम्बन रूप से बुद्धि में) स्थित पदार्थ को पूर्णतया प्रकाशित करती है, (अविद्यादि सभी) क्लेशों को नष्ट करती है, कर्म संस्कारों को प्रशिथिल (कार्याक्षम) करती है और **"असम्प्रज्ञात समाधि"** को सामने लाती है, वह समाधि **"सम्प्रज्ञातयोग"** कही जाती है। सम्प्रज्ञात योग 4 प्रकार का होता है-

1. वितर्कानुगत 2. विचारानुगत 3. आनन्दानुगत 4. अस्मितानुगत

## ॥चित्तवृत्तियां॥

**"वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः"** ॥ चित्त की क्लिष्ट और अक्लिष्ट वृत्तियाँ पाँच प्रकार की हैं ।

**क्लिष्ट** - बाहरी वृत्ति-संसार की ओर ।

**अक्लिष्ट**- विवकेख्याति ।

**चित्तवृत्तियां- (5) "प्रमाणविपर्ययविकल्पनिद्रास्मृतयः"** ॥

1. प्रमाण 2. विपर्यय 3. विकल्प 4. निद्रा 5. स्मृति।

**1. प्रमाण- "प्रत्यक्षानुमानागमाः प्रमाणानि"**। प्रत्यक्ष, अनुमान और आगम इन तीन प्रकार से साधित यथार्थ ज्ञान का नाम 'प्रमाण' है ।

**2. विपर्यय- "विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठितम्"**। विपर्यय 'अतद्रूपप्रतिष्ठ' विषय का विपरीत 'मिथ्याज्ञान' कहलाता है ।

**3. विकल्प- "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः"**। विकल्पवृत्ति शब्दज्ञान के अनुपाती और वस्तुशून्य अर्थात् अवास्तव पदार्थ (पद का अर्थमात्र) विषयक व्यवहार्य एक प्रकार का ज्ञान है ।

**4. निद्रा- "अभावप्रत्ययालम्बना वृत्तिर्निद्रा"**। जागृत् तथा स्वप्न के अभाव के प्रत्ययस्वरूप अथवा हेतुभूत तमस् (जड़ता विशेष) को अवलम्बन करने वाली वृत्ति निद्रा कहलाती है ।

**5. स्मृति- "अनुभूतविषयासंप्रमोषः स्मृतिः"**। (संप्रमोषः=उपस्थिति) अनुभूत विषय का असम्प्रमोष अर्थात् तदनुरूप आकार युक्त वृत्ति स्मृति है । स्मृति दो प्रकार की है-

1. **कल्पितस्मृतिविषय** 2. यथार्थस्मृतिविषय ।

### चित्तवृत्तीनाम् निरोधः-

**"अभ्यासवैराग्याभ्यां तन्निरोधः"**। (तत्-चित्तवृत्ति) अभ्यास और वैराग्य के द्वारा चित्तवृत्तियों का निरोध होता है ।

**अभ्यास- "तत्र स्थितौ यत्नोऽभ्यासः"**। स्थिति विषयक यत्न का नाम 'अभ्यास' है ।

**वैराग्य - "दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्"**। दृष्ट और आनुश्रविक विषय में वितृष्णा चित्त का वशीकार संज्ञक वैराग्य होता है ।

## ॥ईश्वरस्वरूप ॥

**"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः ईश्वरः"** ॥

क्लेश, कर्म, विपाक, आशय से रहित पुरुष विशेष ईश्वर है ।

**(1) क्लेश पाँच हैं-**

**"अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः'**।

1. अविद्या 2. अस्मिता 3. राग 4. द्वेष 5. अभिनिवेश।

**1.अविद्या**-'अनित्याऽशुचिदुःखानात्मसु,नित्यशुचिसुखात्मख्यातिरविद्या'।

**2. अस्मिता**- 'दृग्दर्शनशक्त्योरेकात्मतेवास्मिता'।

**3. राग** - 'सुखातिशयानुरागः'।

**4. द्वेष** - 'दुःखानुशयी द्वेषः'।

**5. अभिनिवेश** - 'स्वरसंवाही विदुषोऽपि तथारूढोऽभिनिवेशः'।

**(2) कर्म- "कुशलाकुशलानि कर्माणि"**। पुण्य और पाप ये कर्म हैं ।

**(3) विपाक- "कर्मफलं विपाकः"**। कर्म का फल ही विपाक है ।

**(4) आशय- "तदनुगुणा वासना आशयाः"**। विपाकजन्य संस्कार वासना है वही आशय है ।

**तत्र निरतिशयं सर्वज्ञबीजम्** ॥ (अतिशय सर्वज्ञता ईश्वर में होती है ।)

**स पूर्वेषामपि गुरुः कालेनानवच्छेदात्** ॥ (काल से अनवच्छिन्न होने के कारण वह सबका गुरु है)।

**तस्य वाचकः प्रणवः** ॥ (ईश्वर का वाचक प्रणव है ।)

**तज्जपस्तदर्थभावनम्** ॥ (उस प्रणव का जप करना चाहिये।)

**ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च** ॥ (उस समय जीवात्मा के विघ्नों का अभाव होता है ।)

**"प्रच्छर्दनविधारणाभ्यां वा प्राणस्य"**। प्राण के प्रच्छर्द्दन तथा विधारण के द्वारा भी चित्त स्थिति पाता है ।

**प्रच्छर्दन**-'रेचक', **विधारण** -'पूरक कुम्भक' का ग्रहण ।

## ॥योगाङ्ग ॥

**"यमनियमाऽऽसनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि"**।

योगाङ्ग आठ हैं-

| | | | |
|---|---|---|---|
| 1. यम | 2. नियम | 3. आसन | 4. प्राणायाम |
| 5. प्रत्याहार | 6. धारणा | 7. ध्यान | 8. समाधि । |

बाह्याङ्ग- **पाँच** । अन्तरङ्ग- **तीन** ।

### (1) यम

**"अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः"**।

यम पाँच हैं-

1. अहिंसा 2. सत्य 3. अस्तेय 4. ब्रह्मचर्य 5. अपरिग्रह ।

**1. अहिंसा- 'अहिंसा सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः'**। अहिंसा सर्वथा हमेशा सभी भूतों के प्रति अनभिद्रोह है ।

**2. सत्य- "सत्यं यथार्थे वाङ्मनसे"**। अर्थात् जिस प्रकार दृष्ट, अनुमित अथवा श्रुत हुआ है, उसी प्रकार मन में चिंतन और वाक्य में कथन सत्य कहलाता है ।

**3. अस्तेय-"स्तेयमशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणम्। तत्प्रतिषेधः पुनरस्पृहारूपमस्तेयमिति"**। अशास्त्रपूर्वक अवैधरूप से किसी दूसरे की वस्तु न लेना अस्तेय है ।

**4. ब्रह्मचर्यम्- "ब्रह्मचर्यं गुप्तेन्द्रियस्योपस्थस्य संयमः"**। गुप्तेन्द्रियरूप उपस्थ का संयम ।

**5.अपरिग्रह-"विषयाणामर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणम परिग्रह"**। अर्जन, रक्षण, क्षय, सङ्ग और हिंसा विषयक इन पाँच प्रकार के दोषों को देखकर उनका ग्रहण न करना ही अपरिग्रह है।

**"जातिकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्"**। जाति, देश, काल और समय से अनवच्छिन्न होकर सार्वभौम होने पर ये यम महाव्रत कहे जाते हैं ।

## (2) नियम

**"शौचसन्तोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमाः"।**

नियम पाँच हैं-

1. शौच 2. सन्तोष 3. तप 4. स्वाध्याय 5. ईश्वरप्रणिधान

1. **शौच- "शौचं मृज्जलादिजनितं मेध्याभ्यवहरणादि च बाह्यम्, आभ्यन्तरं-चित्तमलानामाक्षालनम्"।** मिट्टी और जल से जनित तथा मेध्य आहार इत्यादि शौच बाह्य होते हैं । आभ्यन्तर शौच चित्तमल का क्षालन है ।
2. **सन्तोष- "सन्तोषः सन्निहितसाधनादिकस्यानुपादित्सा"।** केवल प्राणधारणयोग्य उपलब्ध साधन से अधिक साधन के ग्रहण की इच्छा न होना सन्तोष है ।
3. **तप- "तपो द्वन्द्वसहनम्"।** भूख-प्यास, सर्दी-गर्मी, इत्यादि व्रत समूह व्रत कहलाते हैं ।
4. **स्वाध्याय- "स्वाध्यायो मोक्षशास्त्राणामध्ययनं प्रणवजपो वा"।** मोक्षशास्त्राध्ययन अथवा प्रणवजप ही स्वाध्याय है ।
5. **ईश्वरप्रणिधान- "ईश्वरप्रणिधानं तस्मिन् परमगुरौ सर्वकर्मार्पणम्"।** परम गुरु ईश्वर में सभी कर्म अर्पण करना ईश्वरप्रणिधान है ।

**"शय्यासनस्थोऽथ पथि व्रजन् वा स्वस्थः परिक्षीणवित्तर्कजालः ।**
**संसारबीजक्षयमीक्षमाण स्यान्नित्यमुक्तोऽमृतभोगभागी" ॥**

### योगाङ्गों के प्रतिष्ठित हो जाने पर फल-

(1) यम-

1. **अहिंसा - "अहिंसा प्रतिष्ठायां तत्सन्निधौ वैरत्यागः"।** अहिंसा के प्रतिष्ठित हो जाने पर तत्सन्निधि में प्राणी 'निर्वैर' होते हैं ।
2. **सत्य- "सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्"।** सत्य प्रतिष्ठित हो जाने पर वाक्य 'क्रियाफ़लाश्रयत्व' गुण से युक्त होता है ।
3. **अस्तेय- "अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्"।** अस्तेय की प्रतिष्ठा होने से 'सर्वरत्न' उपस्थित होते हैं ।
4. **ब्रह्मचर्य- "ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः"।** ब्रह्मचर्य की प्रतिष्ठा होने पर 'वीर्यलाभ' होता है ।
5. **अपरिग्रह- "अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः"।** अपरिग्रहस्थैर्य से 'जन्मकथन्ता' भूत, भविष्य, वर्तमान का ज्ञान होता है ।

(2) नियम-

1. **शौच- "शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः"।** शौच के प्रतिष्ठित हो जाने से अपने शरीर में घृणा और पर के साथ संसर्ग की अनिच्छा होती है । **"सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च"।** सत्त्वशुद्धि, सौमनस्य, ऐकाग्र्य, इन्द्रियजय तथा आत्मदर्शनयोग्यत्व की सिद्धि होती है ।
2. **सन्तोष- "सन्तोषादनुत्तमसुखलाभः"।** सन्तोष से अनुत्तम सुख का लाभ होता है ।

**"यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।**
**तृष्णाक्षयसुखस्यैते मार्हतः षोडशीं कलाम्" ॥**

3. **तप- "कायेन्द्रियसिद्धिरशुद्धिक्षयात् तपसः"।** तपाचरण से अशुद्धि का क्षय होने के कारण कायेन्द्रिय सिद्धि होती है ।
4. **स्वाध्याय - "स्वाध्यायादिष्टदेवतासम्प्रयोगः"।** स्वाध्याय से इष्ट देवता के साथ मिलन होता है ।
5. **ईश्वरप्रणिधान- "समाधिसिद्धिरीश्वरप्रणिधानात्"।** ईश्वरप्रणिधान से समाधि सिद्ध होती है ।

## (3) आसन

**"स्थिरमुखमासनम्"।** निश्चल और सुखावह उपवेशन ही आसन है । **जैसे-** पद्मासन, वीरासन, भद्रासन, स्वस्तिकासन, पंडासन, सोपाश्रय, पर्यंक, क्रौञ्चनिषदन, हस्तिनिषदन, उष्ट्रनिषदन, समसंस्थान इत्यादि स्थिरसुख अर्थात् यथासुख होने से आसन कहे जाते हैं ।

**आसनसिद्धि-"प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्"।** 'प्रयत्नशैथिल्य' और 'अनन्तसमापत्ति' के द्वारा आसन की सिद्धि होती है ।

**"ततो द्वन्द्वानभिघातः"।** आसन सिद्धि से द्वन्द्वाभिघात नहीं होता है ।

## (4) प्राणायाम

**"तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः"।** आसन की सिद्धि होने के पश्चात् श्वासप्रश्वास का गतिविच्छेद ही प्राणायाम है ।

**"बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मः"।** वह प्राणायाम 'बाह्यवृत्ति', 'आभ्यन्तरवृत्ति' और 'स्तम्भवृत्ति' होता है ।

**बाह्यवृत्ति/रेचक - "यत्र प्रश्वासपूर्वको गत्यभावः स बाह्यः"।** जिसमें प्रश्वासपूर्वक गत्यभाव है वह बाह्यवृत्तिक प्राणायाम है ।

**आभ्यन्तर/पूरक- "यत्र श्वासपूर्वको गत्यभावः स आभ्यन्तरः"।** जिसमें श्वासपूर्वक गत्यभाव है वह आभ्यन्तर वृत्तिक है ।

**स्तम्भवृत्ति/कुम्भक- "स्तम्भवृत्तिर्यत्रोभयाभावः सकृत्प्रयत्नाद्भवति"।** जिसमें बाह्य और आभ्यन्तर दोनों वृत्ति का अभाव होता है, वह स्तम्भवृत्तिक प्राणायाम होता है, और वह एककालीन प्रयत्न द्वारा होता है ।

**केवलकुम्भक-"बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः"।** बाह्य तथा आभ्यन्तर विषय का आक्षेपक चतुर्थ प्राणायाम होता है ।

**"ततः क्षीयते प्रकाशावरणम्"।** उससे प्रकाश का आवरण क्षीण होता है।

**"धारणस्तु योग्यता मनसः"।** और सब धारणाओं में मन की योग्यता होती है । प्राणायाम की सिद्धि से प्रकाश पर पड़ा हुआ पर्दा क्षीण होता है ।

## (5) प्रत्याहार

**"स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः"।** स्व विषय के साथ संयुक्त होने पर इन्द्रियों का जो स्वरूपानुकार होता है, इन्द्रियों का

प्रत्याहार भी उसी प्रकार का होता है । यथा- **"मधुकरराज-मक्षिका उत्पतन्तमनुत्पतन्ति निविशमानमनु निविशन्ते।**
**तथेन्द्रियाणि चित्तनिरोधेनिरुद्धानि इत्येष प्रत्याहार:"।** जिस प्रकार उड़ती हुई रानी मक्षिका के पीछे अन्य मधुवायी मक्षिकाएं भी उड़ती हैं और उसके बैठने पर बैठ जाती है, उसी प्रकार इन्द्रियगण भी चित्तनिरोध होने पर निरुद्ध होते हैं, यही प्रत्याहार है ।
"ततः **परमा वश्यतेन्द्रियाणाम्"**। प्रत्याहार की सिद्धि से इन्द्रियसमूह की परमावश्यता होती है ।

## (6) धारणा

**"देशबन्धश्चित्तस्य धारणा"**। देश में बन्ध होना ही चित्त की धारणा है। यथा- **'नाभिचक्रे, हृदयपुण्डरीके......'**। नाभिचक्र, हृदयपुण्डरीक, मूर्द्धज्योति, नासिकाग्र, जिह्वाग्र, इत्यादि देश में बन्ध होना **अथवा** बाह्य विषय का जो वृत्तिमात्र के द्वारा बन्ध है, वही धारणा है ।

## (7) ध्यान

**"तत्र प्रत्ययैकतानता ध्यानम्"**। उस धारणा में प्रत्यय (ज्ञानवृत्ति) की एकतानता ध्यान है ।

## (8) समाधि

**"तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि:"**। ध्येयाकारनिर्भास ध्यान ही जब ध्येयस्वभावावेश से अपने ज्ञानात्मक स्वभावशून्य के समान होता है, तब उसे समाधि कहते हैं ।
**"त्रयमेकत्र संयम:"**। (ये तीनों संयम कहे जाते हैं।)
**"तज्जयात् प्रज्ञालोक:"**।। (संयम को जीतने से प्रज्ञा का प्रकाश होता है।)
**'वैशारद्यकाल'** में **'विशिष्टप्रज्ञा'** उत्पन्न होती है जिसका नाम **'ऋतम्भरा'** है, वह **"अन्वर्थनामा"** होती है ।

**"आगमेनानुमानेन ध्यानाभ्यासरसेन च।**
**त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम्"**

### समाधि के दो प्रकार-

**1. सम्प्रज्ञात** **2. असम्प्रज्ञात**

**(1) सम्प्रज्ञात-**

**"वितर्कविचारानन्दास्मितारूपानुगमात् संप्रज्ञात:"।**

सम्प्रज्ञात समाधि के चार प्रकार-

1. **वितर्क** - "वितर्कश्चित्तस्यालम्बने स्थूल आभोग:"।
2. **विचार** - "सूक्ष्मो विचार:"।
3. **आनन्द** - "आनन्दो आह्लाद:"।
4. **अस्मिता** - "एकात्मिका संविदस्मिता"।

**(2) असम्प्रज्ञात-**

**"विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्य:"**। विराम (सब प्रकार की आलम्बन वृत्ति के निरोध) के कारणभूत परवैराग्य के अभ्यास द्वारा साध्य संस्कार शेष रूप समाधि असम्प्रज्ञात है ।
**"भवप्रत्ययो विदेहप्रकृतिलयानाम्"**। विदेह देवताओं और प्रकृति तीनों को **'भव'** नामक असम्प्रज्ञात समाधि होती है ।
**"श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्"**। योगियों को 'उपाय' प्रत्यय नामक असम्प्रज्ञात समाधि होती है । **श्रद्धा**- अभिरुचि, **वीर्य**- उत्साह, **स्मृति**- ध्यान, **समाधि**- समाहित, **प्रज्ञा**- विवेकज्ञान ।
**"तीव्रसंवेगानामासन्न:"**। **"मृदुमध्याधिमात्रत्वात् ततोऽपि विशेष:"**।
योगी मृदुमात्र व अधिमात्र उपायों के भेद से नौ प्रकार के होते हैं ।




**"ईश्वरप्रणिधानाद्वा"**। ईश्वर प्रणिधान से भी असम्प्रज्ञात समाधि होती है।
**क्रियायोग- "तपः स्वाध्यायेश्वर-प्रणिधानानि-क्रियायोग:"॥**
अर्थात् क्रियायोग के तीन पक्ष है
1 तप,2 स्वाध्याय , 3 ईश्वर प्रणिधान योग ।

## ॥कैवल्य ॥

**कैवल्य- "सत्वपुरुषयो: शुद्धिसाम्ये कैवल्यम्"**।
वेदान्त के अनुसार पुरुष एक है। प्रकृति की कोई भी वस्तु किसी को कुछ भी नहीं दिखा सकती है। "असम्प्रज्ञात समाधि" में भी कहीं न कहीं कुछ मोह रहता है। (प्रकृति का प्रकृति तथा पुरुष का पुरुष होना ही कैवल्य है।) अर्थात् दोनों का पृथक्-पृथक् ज्ञान ही कैवल्य है। प्रकृति पुरुष के एक होने पर व्युत्थान होता है।

- **पुरुष**- निरोधावस्था = मूलरूप,
- **पुरुष**- व्युत्थानावस्था = प्रतिबिम्बितरूप, प्रतिबिम्बित पुरुष के सत्व, रज, तम, गुण होते हैं।
- **"पुरुषार्थशून्यानां गुणानां प्रतिस्रव: कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति"**।
- **जीवनमुक्ति**- जीवनावस्था में कैवल्य को 'जीवनमुक्ति' कहा जाता है।
- **विदेहमुक्ति**- शरीरपात के पश्चात् गुणों का प्रतिस्रव होने से विदेहमुक्ति होती है ।



# ॥सबीज समाधि॥

**समापत्तिः-**

**"क्षीणवृत्तेरभिजातस्येवमणेर्ग्रहीतृग्रहणग्राह्येषुतत्स्थतदञ्जनतासमापत्तिः"।** अभिजात (सुनिर्मल) मणि के समान ग्रहीता, ग्रहण तथा ग्राह्य में क्षीणवृत्ति चित्त की तत्स्थिरता और तदञ्जनता समापत्ति होती है ।

**स्थूलविषयक समापत्तियाँ-** 1. सवितर्का 2. निर्वितर्का ।

1. **सवितर्का- "शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः"।** शब्दार्थज्ञान के विकल्प से संकीर्ण या मिश्रित समापत्ति 'सवितर्का' है ।
2. **निर्वितर्का-"स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का"।** स्मृतिपरिशुद्धि होने से स्वरूपशून्य जैसी अर्थमात्रनिर्भासा समापत्ति 'निर्वितर्का' होती है ।

**सूक्ष्मवस्तुविषयक समापत्तियाँ-** 1. सविचारा 2. निर्विचारा ।

**1.सविचारा-"तत्राभूतसूक्ष्मेष्वभिव्यक्तधर्मकेषुदेशकालनिमित्तानुभवावच्छिन्नेषु या समापत्तिः सा सविचारेत्युच्यते"।** अभिव्यक्तधर्मवाले सूक्ष्मभूत में देश, काल तथा निमित्त के अनुभव द्वारा जो अवच्छिन्न समापत्ति होती है, वह 'सविचारा' है ।

**2.निर्विचारा-"या पुनः सर्वथा सर्वतः शान्तोदिताव्यपदेश्यधर्मानवच्छिन्नेषु सर्वधर्मानुपातिषु सर्वधर्मात्मकेषु समापत्तिः सा निर्विचारित्युच्यते"।** शांत, उदित तथा अव्यपदेश, इस धर्मत्रय द्वारा अनवच्छिन्न सर्वधर्मानुपाती, सर्वधर्मात्मक (सूक्ष्मभूत में) इस प्रकार की जो सब तरह से समापत्ति होती है, वह 'निर्विचारा' है ।

**"निर्विचारवैशारद्येऽध्यात्मप्रसादः"।** निर्विचार समापत्ति के निर्मल हो जाने पर योगी को आध्यात्मिक प्रसाद प्राप्त होता है।

**"प्रज्ञाप्रसादमारुह्य अशोच्यः शोचतो जनान्**
**भूमिष्ठानित शैलस्थः सर्वान्प्राज्ञोऽनुपश्यति"॥**

**"ऋतम्भरा तत्र प्रज्ञा" 'वैशारद्यकाल'** में **'विशिष्टप्रज्ञा'** उत्पन्न होती है, जिसका नाम **'ऋतम्भरा'** है, वह **"अन्वर्थनामा"** होती है ।
(ये चार समापत्तियां **'सबीज'** समाधि हैं ।)

## चित्त के विक्षेप उत्पन्न करने वाले विघ्न - (9)

**"व्याधिस्त्यानसंशयप्रमादाऽलस्याऽविरतिभ्रान्तिदर्शनाऽलब्धभूमिकत्वाऽनवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः"॥**

1. व्याधि, 2. स्त्यान,
3. संशय, 4. प्रमाद,
5. आलस्य, 6. अविरति,
7. भ्रान्तिदर्शन, 8. अलब्धभूमिकत्व,
9. अनवस्थितत्त्व।

1. **व्याधि-** 'तत्र व्याधिर्धातुरसकरणवैषम्यम्' । (शारीरिकपीड़ा)
2. **स्त्यान-** 'स्त्यानमकर्मण्यता चित्तस्य'। (अकर्मण्यता)
3. **संशय-** 'संशय उभयकोटिस्पृग्विज्ञानं स्यादिदमेवंनैवं स्यादिति'।
4. **प्रमाद-** 'प्रमादः समाधिसाधनामभावनम्'। (असावधानी)
5. **आलस्य-** 'आलस्यं कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः'।
6. **अविरति-** 'अविरतिश्चित्तस्य विषयसम्प्रयोगात्मा गर्धः। (वैराग्याभाव)
7. **भ्रान्तिदर्शन-** 'भ्रान्तिदर्शनं विपर्ययज्ञानम्'। (मिथ्याज्ञान)
8. **अलब्धभूमिकत्व-** 'अलब्धभूमिकत्वं समाधिभूमेरलाभः'।
9. **अनवस्थितत्त्व-** 'अनवस्थितत्वं लब्धायां भूमौ चित्तस्याप्रतिष्ठा'।

## विक्षेपों के साथी - (5)

**"दुःख दौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः"।**

1. दुःख, 2. दौर्मनस्य,
3. अङ्गकम्पन, 4. श्वास,
5. प्रश्वास

1. **दुःख-** 'येनाभिहताः प्राणिनस्तदुपघाताय प्रयतन्ते तद् दुःखम्।
2. **दौर्मनस्य** - 'दौर्मनस्यमिच्छाविघाताच्चेतसः क्षोभः'।
3. **अङ्गकम्पन-** 'यदङ्गान्योजयति कम्पयति तदङ्गमेजयत्वम्'।
4. **श्वास-** 'प्राणो यद् बाह्यं वायुमाचामति स श्वासः'।
5. **प्रश्वास-** 'यत्कोष्ठयं वायुं निःसारयति स प्रश्वासः'।




**सम्प्रज्ञात समाधि -**

**सवितर्क** - सवितर्क, "वितर्कश्चित्तस्यालम्बने स्थूल आभोगः"।
**सविचार** - वितर्कविकल, "सूक्ष्मो विचारः"।
**सानन्द** - विचारविकल, "आनन्दो ह्लादः"।

सास्मिता - विकलोऽस्मितामात्र, "एकात्मिका संविदस्मिता"
अस्मिता का ज्ञान ।

## योगदर्शन दर्शन के प्रमुख ग्रन्थ-

**योगसूत्र** - पतंजलि
**योगभाष्य** - वेदव्यास
**तत्त्ववैशारदी** - वाचस्पति मिश्र
**भोजवृत्ति** - धारेश्वर भोज
**योगवार्तिक** - विज्ञानभिक्षु
**योगमणिप्रभा** - रामानन्द सरस्वती
**नीयन्यायमालाविस्तार** - माधवाचार्य

# ॥ब्रह्मसूत्र॥

## परिचय-

ब्रह्मसूत्र, वेदान्त दर्शन का अधारभूत ग्रन्थ है। इसके रचयिता **बादरायण** हैं। इसे **वेदान्त सूत्र, उत्तर-मीमांसा सूत्र, शारीरक सूत्र** और **भिक्षु सूत्र** आदि के नाम से भी जाना जाता है। इस पर अनेक भाष्य भी लिखे गये हैं। अपने वर्तमान रूप में इसकी रचना अनुमानतः **400 से 450 ईसा** पश्चात हुई थी। ब्रह्मसूत्र में उपनिषदों की दार्शनिक एवं आध्यात्मिक विचारों को साररूप में एकीकृत किया गया है। वेदान्त के तीन मुख्य स्तम्भ माने जाते हैं - **उपनिषद्, श्रीमद्भगवद्गीता एवं ब्रह्मसूत्र।** इन तीनों को **प्रस्थानत्रयी** कहा जाता है। इसमें **उपनिषदों को श्रुति प्रस्थान**, गीता को **स्मृति प्रस्थान** और **ब्रह्मसूत्रों** को **न्याय प्रस्थान** कहते हैं। ब्रह्मसूत्रों को न्याय प्रस्थान कहने का अर्थ है कि ये वेदान्त को पूर्णतः तर्कपूर्ण ढंग से प्रस्तुत करता है।

जिस प्रकार मीमांसासूत्र में वेद के कर्मकांड भाग की व्याख्या प्रस्तुत की गई है उसी तरह चार अध्यायों में विभाजित लगभग 500 वेदान्तसूत्रों में वैदिक वाङ्मय के अंतिम भाग अर्थात् उपनिषदों की व्याख्या दी गई है। उपनिषदों में प्रतिपादित सिद्धांत इतने परस्पर विरोधी तथा बिखरे हुए है कि उनसे एक प्रकार का दार्शनिक मत निकालना कठिन है। वेदान्त सूत्र **'समन्वय'** के सिद्धांत का सहारा लेकर उपनिषदों में एक दार्शनिक दृष्टि का प्रतिपादन करता है। पर ये सूत्र स्वयं इतने संक्षिप्त है कि बिना व्याख्या के सहारे उनसे अर्थ निकालना कठिन है। इनकी संक्षिप्तता के कारण इनपर कई व्याख्याएँ लिखी गई जो परस्पर विरोधी दृष्टि से वेदांत का प्रतिपादन करती है। वेदांत के सभी प्रस्थान इन सूत्रों को अपना प्रमाण मानते हैं। ब्रह्म का प्रतिपादन करने के कारण इन सूत्रों को ब्रह्मसूत्र भी कहते हैं। ब्रह्मसूत्र में **चार अध्याय** हैं जिनके नाम हैं - **समन्वय, अविरोध, साधन एवं फल।** प्रत्येक अध्याय के **चार पाद** हैं। कुल मिलाकर इसमें 555 सूत्र हैं।

| अध्याय नाम | सूत्र सँख्या | अधिकरण संख्या |
|---|---|---|
| समन्वय | 134 | 39 |
| अविरोध | 157 | 47 |
| साधन | 186 | 67 |
| फल | 78 | 38 |
| कुल | 555 | 191 |

## ब्रह्मसूत्र पर भाष्य-

ब्रह्मसूत्र पर बहुत से भाष्य लिखे गए हैं। उनमें **सबसे प्राचीन श्री निम्बार्क भाष्य** है। श्री शंकराचार्य ने ब्रह्मसूत्र पर **ब्रह्मसूत्रशांकरभाष्य** लिखा जिसके ऊपर वाचस्पति मिश्र भास्कर तथा पद्मपाद ने भाष्य लिखा। श्री रामानुजाचार्य द्वारा ब्रह्मसूत्र का जो भाष्य लिखा गया उसका नाम **'श्रीभाष्य'** है। इसके अतिरिक्त **श्री मध्वाचार्य, श्रीजयतीर्थ, श्री व्यासतीर्थ** आदि ने भी ब्रह्मसूत्र के भाष्य लिखे हैं।

- **ब्रह्मसूत्र**- बादरायण, शारीरक भाष्य- शङ्कराचार्य,
- **अध्याय**- 4, **पाद**- 16.
- **अधिकरण**- 191, **सूत्र**- 555
- बादरायण से पूर्व उपनिषदों की व्याख्या करने वाले ऋषि -"**आत्रेय, आश्मरथ्य, औडुलौमि, कार्ष्णायिनि, काशकृत्स्न, जैमिनि, बादरि, पाराशर**" आदि ।
- आचार्य शंकर के गुरु - **गौड़पादाचार्य** (इन्होंने गौड़पादकारिका के अन्तर्गत **'अजातवाद'** सिद्धान्त की स्थापना की ।
- शङ्कराचार्य के परवर्ती आचार्यों ने जगत् के स्वरूप को **आभासवाद्, अवच्छेदवाद** एवं **प्रतिबिम्बवाद** के आधार पर स्पष्ट किया है-
- **आभासवाद** - प्रवर्तक सुरेश्वराचार्य
- **प्रतिबिम्बवाद** - प्रवर्तक प्रकाशामयति
- **अवच्छेदवाद** - प्रवर्तक वाचस्पति मिश्र
- **वेदान्त** - बादरायण (चतुर्लक्षणी)
- प्रथम अध्याय – **समन्वयाध्याय**
- द्वितीय अध्याय – **अविरोधाध्याय**
- तृतीय अध्याय – **साधनाध्याय**
- चतुर्थ अध्याय - **फलाध्याय**

# ॥जिज्ञासाधिकरण॥

**वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्य इदम् आदिमं सूत्रम्।**
जिस वेदान्त-मीमांसाशास्त्र की हम व्याख्या करना चाहते हैं, उसका यह प्रथम सूत्र है।

## 1. "अथातो ब्रह्मजिज्ञासा" ।

**सूत्रार्थ-** अथ-अनन्तर; अतः-हेत्वर्थक, **ब्रह्मजिज्ञासा**-ब्रह्मणः जिज्ञासा

**1. तत्र अथ शब्दः आनंतर्यार्थः परिगृह्यते न अधिकारार्थः। ब्रह्मजिज्ञासायाः अनधिकार्यत्वात्। मंगलस्य च वाक्यार्थे समन्वयाभावात्। अर्थान्तर एव हि अथशब्दः श्रुत्या मंगल प्रयोजनो भवति ।**

1. यहाँ अथ शब्द का आनन्तर्यार्थ किया जाता है आरंभ नहीं, क्योंकि ब्रह्मजिज्ञासा का आरंभ नहीं किया जा सकता। और मंगल का वाक्यार्थ में समन्वय नहीं होता इसलिये, अन्य अर्थ में प्रयुक्त हुआ ही 'अथ' शब्द श्रवणद्वारा मङ्गल का प्रयोजक होता है।

किसी भी ग्रन्थ के आरम्भ में विषय, प्रयोजन, संबन्ध और अधिकारी, इस अनुबंधचतुष्टय का निरूपण किया जाता है। यहाँ **विषय 'ब्रह्म'** है। **प्रयोजन** है **'मोक्ष'**। इसकी प्राप्ति के लिए जिज्ञासु में प्रवृत्ति पैदा करने वाला ही **'अध्यासभाष्य'** है। ब्रह्मज्ञान ही ब्रह्म और मोक्ष का संबन्ध है; और **साधनचतुष्टयसंपन्न** ही **अधिकारी** है। यह सब इस पहले सूत्र के भाष्य में निश्चित किया गया है। अथ शब्द के चार अर्थ-**आरंभ, मंगल, पूर्वप्रकृतापेक्षा** और **अनन्तर** का विचार किया गया है। यहाँ किस अर्थ को लेना है? व्याकरण शास्त्र में ' अथ शब्दानुशासनम्', कहा गया है। योगशास्त्र ने भी 'अथ योगानुशासनम्', इस प्रकार अपने पहले सूत्र में अथ शब्द का अर्थ 'आरंभ' किया है। क्या यहाँ भी 'ब्रह्म जिज्ञासा का आरंभ' ऐसा अर्थ करना है? नहीं। क्योंकि **ज्ञातुम् इच्छा-जिज्ञासा**, जानने की इच्छा का नाम जिज्ञासा है। ये या तो रहती है या नहीं रहती 'इच्छा का आरंभ करना' ऐसा कहने का कोई अर्थ नहीं है।

मंगल अर्थ करना भी उचित नहीं है क्योंकि **'अथ ब्रह्मजिज्ञासा-मंगल ब्रह्मजिज्ञासा'** ऐसा कहने पर वाक्य के अर्थ से समन्वय नहीं होगा; दो अलग-अलग वाक्य ही हो जायेंगे। 'लेकिन शिष्टाचारपालन के लिये ग्रंथारंभ में मंगलाचरण आवश्यक है न?' ऐसा पूछा तो ठीक है, आवश्यक है, परन्तु अथ शब्द का प्रयोग और किसी अर्थ में हो तो भी उसके श्रवणमात्र से ही मंगल हो जाता है।

**अतः शब्दो हेत्वर्थः । यस्मात् वेद एव अग्निहोत्रादीनां श्रेयः साधनानाम् अनित्यफलतां दर्शयति "तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते" (छां.8.1.6) इत्यादिः। तथा ब्रह्मविज्ञानादपि परं पुरुषार्थं दर्शयति "ब्रह्मविदाप्नोति परम्" (तै. 2.1) इत्यादिः। तस्मात् यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्या ।**

'अतः' शब्द हेतुवाचक है। 'जैसे यहाँ (खेती आदि से उपार्जित) भोग्यपदार्थ क्षीण हो जाते हैं, उसी प्रकार परलोक में पुण्य से सम्पादन किये हुये लोकों का क्षय हो जाता है (छान्दोग्य8.1.6), इत्यादि श्रुतिवाक्य कल्याण के साधक अग्निहोत्र आदि के फल (स्वर्ग आदि) की अनित्यता दर्शाते हैं। इसी प्रकार 'ब्रह्म को जानने वाला मोक्ष प्राप्त करता है' (तै. 2.1) इत्यादि श्रुतियां ब्रह्मज्ञान से ही परम पुरुषार्थ की प्राप्ति बताती हैं। इसलिये, उपर्युक्त साधनसम्पत्ति प्राप्त करने के पश्चात् ब्रह्मजिज्ञासा करनी चाहिये।

कुछ स्थलों पर श्रुति में कहा गया है कि सोमपान करके मरणरहित हो गये इत्यादि इससे लगता है कि स्वर्गादि फल नित्य हैं। वेद ही बाद में कहता है कि वह अनित्य है। यहाँ नित्य कहा है कर्म के स्तुत्यर्थ में । परन्तु श्रुति ही कहती है कि ब्रह्मविज्ञान से होनेवाला मोक्ष नित्य है। इसलिये, साधन संपत्युपेत साधक ही ब्रह्मजिज्ञासा कर सकता है।

**ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। ब्रह्म च वक्ष्यमाण लक्षणम् "जन्माद्यस्य यतः" इति। अत एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरम् आशङ्कितव्यम्।**

ब्रह्म की जिज्ञासा कब्रह्मजिज्ञासा है। आगे ' जन्माद्यस्य यतः' इस सूत्र में जिसका लक्षण कहा जायेगा, वह ब्रह्म है। इसी कारण से वह शंका नहीं करनी चाहिये कि ब्रह्म शब्द का जाति आदि कोई दूसरा अर्थ है।

ब्रह्म शब्द का ब्राह्मण जाति, चतुर्मुख ब्रह्माजी, वेद, जीव आदि अर्थ भी श्रुति, स्मृति में मिलता है। यहाँ ब्रह्मशब्द का प्रयोग इन अर्थों में नहीं हुआ है। जगत् के जन्म, स्थिति और लय के कारणरूप में ही हुआ है।

**ब्रह्मणः इति कर्मणि षष्ठी न शेषे, जिज्ञास्यापेक्षत्वात् जिज्ञासायाः जिज्ञास्यान्तर अनिर्देशाच्च। ननु शेषषष्ठीपरिग्रहेऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुध्यते, संबंध सामान्यस्य विशेषनिष्ठत्वात्? एवमपि प्रत्यक्षं ब्रह्मणः कर्मत्वम् उत्सृज्य सामान्यद्वारेण परोक्षं कर्मत्वं कल्पयतो व्यर्थः प्रयासः स्यात्। न व्यर्थः, ब्रह्माश्रित अशेषविचार- प्रतिज्ञानार्थत्वात् इति चेत्? न। प्रधानपरिग्रहे तदपेक्षितानाम् अर्थाक्षिप्तत्वात् । ब्रह्म हि ज्ञानेन आप्तुमिष्टतमत्वात् प्रधानम्। तस्मिन् प्रधाने जिज्ञासा कर्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति तानि अर्थाक्षिप्तान्येव इति न पृथक् सूत्रयितव्यानि। यथा "राजासौ गच्छति" इत्युक्ते सपरिवारस्य राज्ञो गमनम् उक्तं भवति, तद्वत्।**

'ब्रह्मणः' यह कर्मवाचक षष्ठी है, शेषवाचकषष्ठी नहीं है, क्योंकि जिज्ञासा को जिज्ञास्य की अपेक्षा रहती है और (ब्रह्म के सिवा) दूसरे जिज्ञास्य का निर्देश भी नहीं है। यदि ऐसा कहो कि शेषषष्ठी के ग्रहण करने में भी ब्रह्म के जिज्ञासा का कर्म होने में कुछ विरोध नहीं हैं, क्योंकि जो सम्बन्धसामान्य का वाचक है, वह विशेषसम्बन्ध को भी दिखलाता ही है, तो इस प्रकार भी ब्रह्म के प्रत्यक्ष कर्मत्व को छोड़ कर सामान्यसम्बन्ध द्वारा परोक्ष कर्मत्व को कल्पना करने में व्यर्थ प्रयास होगा। यदि ऐसा कहो कि वह प्रयास व्यर्थ नहीं हैं, क्योंकि ब्रह्म के आश्रित सब पदार्थों के विचार की प्रतिज्ञा करना प्रयोजन है तो ऐसा भी नहीं है, क्योंकि प्रधान का परिग्रह होने पर, उसको अपेक्षा रखनेवाले सब पदार्थों की अर्थतः स्वीकृति हो जाती है। ज्ञान से प्राप्त करने के लिए इष्टतम (अत्यन्त हृष्ट) ब्रह्म है, अतः वह प्रधान है। जिज्ञासा के कर्म उस प्रधान का ग्रहण होते ही जिनकी जिज्ञासा हुए बिना ब्रह्म की जिज्ञासा नहीं होती, उन सबकी अर्थतः स्वीकृति हो ही जाती है, इसलिए सूत्र में उनको अलग कहने की आवश्यकता नहीं है। जैसे 'यह राजा जाता हैं' ऐसा कहने से ही परिवारसहित राजा के गमन का कथन हो जाता है ।

- **अथ** - "आनन्तर्यार्थ" (मङ्गल का प्रयोजक),
- **अतः**- हेत्वर्थः।
- **"ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा"। 'ब्रह्मणः जिज्ञासा'**- साक्षात्कारपर्यन्तं ज्ञानस्येच्छा ब्रह्मजिज्ञासा- **ब्रह्मणः** - 'कर्मणि

षष्ठी' 'न शेषे जिज्ञास्यापेक्षत्वात्'। (कर्मणि षष्ठी से षष्ठीतत्पुरुष समास) यहां पर षष्ठी शेषे से षष्ठी नहीं होती।

- **शेष अर्थ-** सम्बन्धसामान्य, प्रत्यक्षार्थ ग्रहण, परोक्षार्थ ग्रहण।
- **जिज्ञासा** - "ज्ञातुम् इच्छा जिज्ञासा"। जिज्ञासा के 'सा' में सन् (इच्छा वाचक) प्रत्यय है। इच्छा का कर्म - ज्ञान। इच्छा का विषय - **फल**।
- **ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात्। सामान्यर्थे प्रसिद्धम्-** "सर्वस्यात्मत्ववाच्य ब्रह्मतत्त्वप्रसिद्धिः, तद्विशेषं प्रति विप्रतिपत्तेः"। **ब्रह्मप्रसिद्धम्-** "ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं, सर्वज्ञं, सर्वशक्तिसमन्वितम्"।
- **ब्रह्म** - 'बृंहणात् ब्रह्म' (बृहि वृद्धौ) आत्मा के अस्तित्व की प्रसिद्धि से आत्मा ही ब्रह्म है।
- जन्मादिधर्म के ज्ञान का फल - अभ्युदय (अनुष्ठान की अपेक्षा)
- ब्रह्मज्ञान का फल – **मोह**
- **ब्रह्मज्ञान की इच्छा के चार साधन –**
  (1) नित्यानित्यवस्तुविवेक (2) इहामुत्रभोगविराग
  (3) शमदमादिसाधनसम्पत्ति (4) मुमुक्षत्व।
- ब्रह्म की अवगति प्रमाण से इष्ट है- **ज्ञान प्रमाण**।
  **"ज्ञानेन हि प्रमाणेन अवगन्तुम् इष्टं ब्रह्म"।**
- **पुरुषार्थः** - **"ब्रह्मावगतिर्हि पुरुषार्थः"**। (ब्रह्म की अवगति ही पुरुषार्थ है।)

## 2. "जन्माद्यस्य यतः"।

**सूत्रार्थ-** अर्थात् जन्मादि = जन्म, आदि (उत्पत्ति , स्थिति और प्रलय ), अस्य=इस जगत् के, यतः = जिससे होते हैं , वह ब्रह्म है । इस पद की सामान्य व्याख्या यह है की जो जड़ - चेतनात्मक जगत् सर्वसाधारण के देखने, सुनने और अनुभव में आ रहा है, जिसकी अद्भुत रचना के किसी एक अंश पर भी विचार करने से बड़े से बड़े वैज्ञानिकों को आश्चर्यचकित होना पड़ता है, इस विचित्र विश्व के जन्म आदि जिससे होते हैं अर्थात् जो सर्वशक्तिमान् परमेश्वर अपनी अलौकिक शक्ति से इस सम्पूर्ण जगत् की रचना करता है तथा इसका धारण पोषण तथा नियमित रूप से संचालन करता है एवं फिर प्रलयकाल आने पर जो इस समस्त विश्व को अपने में विलीन कर लेता है, वह परमात्मा ही ब्रह्म है । श्रीमद् भागवत में भी यही कहा गया है- **"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"** अर्थात् इस परमेश्वर की ज्ञान , बल और क्रियारूप स्वाभाविक दिव्य शक्ति नाना प्रकार की ही सुनी जाती है।

- **जन्म** – उत्पत्तिः,
- आदि - आदि से जन्म, स्थिति, नाश का ग्रहण किया जाता है ।
- **'जन्माद्यस्य यतः'** इसमें **"तद्गुणसंविज्ञान** बहुव्रीहिः" समास है।
- **तद्गुणसंविज्ञान बहुव्रीहि-** जन्म, स्थिति प्रलय।
- **अतद्गुणसंविज्ञाने-** स्थिति, प्रलय ।
- **'यतः' इति पदेन ब्रह्मणः जगत् प्रति 'निमित्तकारणं' स्वीक्रियते।** जन्मादि का ग्रहण ''वस्तुस्थिति'' और ''श्रुतिनिर्देश'' से है।
- तीन भावविकार- **जन्म, स्थिति, लय** ।
- **जन्माद्यस्य यतः** - तटस्थ लक्षण- **"कदाचित्कत्वे सति व्यावर्तकं तटस्थ लक्षणम्"।**
- **सच्चिदानन्दं ब्रह्म, ज्ञानमनन्तं ब्रह्म- स्वरूप लक्षण** ।
- **षष्ठी** - "षष्ठी जन्मादि धर्मसम्बन्धार्था"। (षष्ठी वि.से जन्मादि धर्म से धर्मी के सम्बन्ध का द्योतन करती है।)
- **यतः** - कारण, 'यतः इति कारण निर्देशः'।
- ब्रह्मज्ञान भी वस्तु के अधीन है- **''ब्रह्मज्ञानमपि वस्तुतन्त्रम्।''**

# ॥शास्त्रयोनित्यधिकरण॥

## 3. "शास्त्रयोनित्वात्"।

**सूत्रार्थ-** ब्रह्मसूत्र अध्याय 1 पाद 1 का तीसरा सूत्र है 'शास्त्रयोनित्वात्' अर्थात् शास्त्र की योनि होने के कारण ब्रह्म सर्वज्ञ है। ऋग्वेद, यजुर्वेद, सामवेद, अथर्ववेद इन वेदों के कर्म-काण्ड और ज्ञान काण्ड पुराण, न्याय, मीमांसा, धर्मशास्त्र, शिक्षा, कल्प, व्याकरण, निरुक्त, छन्द शास्त्र, ज्योतिष आदि विद्या स्थानों को पोषित करने वाले ऋग्वेद का मूल ब्रह्म है। ऋग्वेद से ब्रह्म के स्वरूप का यथार्थ ज्ञान प्राप्त होता है अतः ऋग्वेद ब्रह्म ज्ञान प्राप्त करने का प्रमाण है आधार है कारण है। ब्रह्म वेदान्त शास्त्र द्वारा ही जाना जा सकता है। ब्रह्म स्वरूप बतलाना ही वेदान्त शास्त्र का लक्ष्य है। ब्रह्म स्वरूप का ज्ञान प्राप्त होने के पश्चात् भेद बुद्धि नष्ट हो जाती है। 'मैं ब्रह्म हूँ, यह जीवात्मा बद्ध है'इन श्रुति वचनों का तात्पर्य यही है कि जीव और ब्रह्म अभिन्न है। 'मैं ब्रह्म हूँ' जो ऐसा जानता है वह ब्रह्म मूल ही हो जाता है। 'ब्रह्म सब कुछ देखता रहता है उसे कोई नहीं देख सकता। वह सब कुछ जानता रहता है किन्तु उसे कोई नहीं जान सकता। जीवात्मा स्वयं ब्रह्म होते हुए भी अज्ञान के कारण संसारी बन जाता है, इस अज्ञान के नष्ट होते ही जीव ब्रह्म-स्वरूप बन जाता है। अपने यथार्थ स्वरूप को पहचान लेना यानी यह जान लेना कि जीव-ब्रह्म स्वरूप ही है **मोक्ष** है। श्वेताश्वतरोपनिषद् में वर्णन है कि ब्रह्म के लिए कार्य रूप शरीर नहीं है - कारण रूप इन्द्रियाँ नहीं है - न कोई उसके समान है, न उससे बढ़कर है उसकी शक्ति महान व नाना प्रकार की है। हाथ न होने पर भी वह ग्रहण करता है, पैर न होने पर भी चलता है, आँख न होने पर भी देखता है, कान न होने पर भी सुनता है। जो कुछ जानने योग्य है वह सब जानता है किन्तु उसे जानने वाला कोई नहीं है।"

- **"शास्त्रं योनि प्रमाणं यस्मिन् तस्य भावः शास्त्रयोनित्वं तस्मात् शास्त्रयोनित्वात्"।**
- **योनि** – 'कारण', 'प्रमाण'।
- योनि से यहाँ 'कारण' यह अर्थ लिया है।
- ब्रह्म प्रत्यक्षादि प्रमाणों से नहीं अपितु शब्द प्रमाण से गम्य है।

## ॥समन्वयाधिकरण ॥

### 4. तत्तु समन्वयात् -

'तु' - 'तु शब्दः पूर्वपक्षव्यावृत्त्यर्थः' ।

**सूत्रार्थ-** जगत् की उत्पत्ति आदि कार्य ब्रह्म ही करता है। अनुमान आदि प्रमाणों से इसकी पुष्टि होने से। प्रस्तुत सूत्र में सूत्रकार यह बतलाना चाहता है कि इस सुंदर सृष्टि को देखकर के यह अनुमान होता है कि जरूर इसका कोई बनाने वाला होगा क्योंकि बिना बनाये कुछ भी नहीं बनता। फिर इस सुंदर विशाल सृष्टि का निर्माण अपने आप कैसे हो सकता है यह शब्द प्रमाण वेद के साथ साथ अनुमान प्रमाण से भी प्रमाणित हो रहा है अर्थात् सिद्ध हो रहा है। जैसे एक घड़े को देखकर उसके निमित्त कारण कर्ता कुम्हार का ज्ञान होता है।

वेदान्त में आए पदों का ब्रह्मस्वरूप के स्वरूप में निश्चित समन्वय अवगत होने पर अन्य अर्थ की कल्पना करना ठीक नहीं है। ऐसा करने पर दोष उपस्थित होते हैं - **'श्रुतहानि' 'अश्रुतकल्पना'** ।

**"यागाद्यनुष्ठायिनाम् एव विद्यासमाधिविशेषाद् उत्तरेण पथा गमनं।
इष्टापूर्तदत्तसाधनैः धूमादिक्रमेण दक्षिणेन पथा गमनं"।**

- **क्रिया- "क्रिया हि नाम सा यत्र वस्तुस्वरूपनिरपेक्षा एव चोद्येतु पुरुषचित्तव्यापारधीना च"।**
- ज्ञान- "ज्ञानं तु प्रमाणजन्यं"।
- **शङ्कराचार्य का ब्रह्म भेदत्रय शून्य है -**
  **स्वगत** - ब्रह्म बिना शरीर का है तो उसका कोई भेद नहीं होता।
  **सजातीय** - ब्रह्म का दूसरा सजातीय कोई नहीं है।
  **विजातीय** - ब्रह्म से अलग कोई नहीं है।
  रामानुज केवल स्वगत को मानते हैं।
- **शुद्धाद्वैत** - इनके मतानुसार जब तक माया का ज्ञान है तब तक शुद्ध ब्रह्म को नहीं जाना जा सकता। इनके आचार्य 'वल्लभाचार्य' हैं।
- **द्वैतवाद** - जीव ब्रह्म अलग-अलग हैं, इनमें नियम-नियामक भाव सम्बन्ध् है। उदाहरण- जल और वर्षा सब जल है।
- **द्वैताद्वैतवाद** - जल और बर्फ एक ही है भेद से अलग है।

## ॥न्यायदर्शन ॥

न्याय दर्शन भारत के छः वैदिक दर्शनों में एक दर्शन है। इसके प्रवर्तक ऋषि **अक्षपाद गौतम** हैं जिनका न्यायसूत्र इस दर्शन का सबसे प्राचीन एवं प्रसिद्ध ग्रन्थ है। जिन साधनों से हमें ज्ञेय तत्त्वों का ज्ञान प्राप्त हो जाता है, उन्हीं साधनों को 'न्याय' की संज्ञा दी गई है। **देवराज** ने 'न्याय' को परिभाषित करते हुए कहा है- **नीयते विवक्षितार्थः अनेन इति न्यायः** (जिस साधन के द्वारा हम अपने विवक्षित (ज्ञेय) तत्त्व के पास पहुँच जाते हैं, उसे जान पाते हैं, वही साधन न्याय है।)

दूसरे शब्दों में, जिसकी सहायता से किसी सिद्धान्त पर पहुँचा जा सके, उसे न्याय कहते हैं। इसे तर्कशास्त्र, प्रमाणशास्त्र, हेतुविद्या, वादविद्या तथा **आन्वीक्षिकी** भी कहा जाता है। **वात्स्यायन** के अनुसार **'प्रमाणैरर्थपरीक्षणं न्यायः'** प्रमाणों द्वारा अर्थ (सिद्धान्त) का परीक्षण ही न्याय है। न्यायशास्त्र उच्चकोटि के संस्कृत साहित्य और विशेषकर भारतीय दर्शन का प्रवेशद्वार है। वैशेषिक दर्शन की ही भांति न्यायदर्शन में भी पदार्थों के तत्त्व ज्ञान से निःश्रेयस् की सिद्धि बतायी गयी है। न्यायदर्शन में 16 पदार्थ माने गये हैं-

1. **प्रमाण** – ये मुख्य चार हैं – प्रत्यक्ष , अनुमान , उपमान एवं शब्द।
2. **प्रमेय** – ये बारह हैं – आत्मा, शरीर, इन्द्रियाँ, अर्थ , बुद्धि, ज्ञान, उपलब्धि , मन, प्रवृत्ति , दोष, प्रेत्यभाव , फल, दुःख और अपवर्ग।

3. **संशय** 4. **प्रयोजन** 5. **दृष्टान्त**

6. **सिद्धान्त** – चार प्रकार के है : सर्वतन्त्र सिद्धान्त , प्रतितन्त्र सिद्धान्त, अधिकरण सिद्धान्त और अभ्युपगम सिद्धान्त।

7. अवयव 8. **तर्क** 9. **निर्णय**

10 वाद 11 **जल्प** 12 **वितण्डता**

13. **हेत्वाभास** – ये पांच प्रकार के होते हैं : सव्यभिचार, विरुद्ध, प्रकरणसम, साध्यसम और कालातीत।

14. छल – वाक् छल , सामान्य छल और उपचार छल।

15. जाति 16. निग्रहस्थान ।

### न्यायदर्शन का इतिहास-

गौतम के **'न्यायसूत्र'** से ही न्यायशास्त्र का इतिहास स्पष्ट रूप से प्रारम्भ होता है। प्राचीन ग्रन्थों में इस न्यायशास्त्र के कतिपय सिद्धान्तों की चर्चा तो आज भी विशद रूप से उपलब्ध है; परन्तु उस प्राचीन तर्कशास्त्र का सम्यक् एवं सर्वांगपूर्ण स्वरूप क्या और कैसा था, इसका सही ज्ञान किसी को नहीं है। **'बौद्ध दर्शन'** के प्रकरणों में यह उल्लेख मिलता है कि बौद्ध मत वाले अपने मत का प्रतिपादन आस्तिक सिद्धान्तों के विरुद्ध किया करते थे। इसी का प्रतिषेध करने हेतु न्यायदर्शन की संरचना हुई।

बुद्ध का समय **छठी शताब्दी** ईसा पूर्व माना जाता है। यही वह समय था जब गौतम ने न्यायशास्त्र की रचना की। न्यायदर्शन का एक नाम **तर्कशास्त्र** भी है। प्राचीन ग्रन्थ शास्त्रों में किन्हीं-किन्हीं स्थानों में गौतम तथा कहीं-कहीं **अक्षपाद** को न्यायदर्शन का रचयिता कहा गया है। **उमेश मिश्र** द्वारा रचित **'भारतीय दर्शन'** में कहा गया है कि **तर्कशास्त्र** बौद्धों के पहले भी था और वह बड़ा व्यापक था। इसके भिन्न-भिन्न प्राचीन नाम हैं। यथा - **आन्वीक्षिकी, हेतुशास्त्र, हेतुविद्या, तर्कशास्त्र, तर्कविद्या, वादविद्या, प्रमाणशास्त्र, वाकोवाक्य, तर्की, विमंसि** आदि।

न्यायसूत्र की संरचना कब हुई, इसका निर्णय कर पाना बहुत कठिन है। कारण कि विद्वानों ने ई.पू. छठवीं शताब्दी से लेकर ईसा पूर्व पाँचवी शताब्दी के बीच अपनी मान्यतायें प्रस्तुत की हैं, परन्तु सबके अपने-अपने

पक्ष तर्कयुक्त हैं। उससे किसी निश्चित निर्णय पर नहीं पहुँचा जा सकता। न्यायशास्त्र के समग्र विचार दो धाराओं में विभक्त किए जा सकते हैं - प्रमेयप्रधान और प्रमाणप्रधान। **गौतम** से **गंगेशोपाध्याय** के पूर्व तक के विद्वानों की रचनाओं के विचार **प्रमेयप्रधान** हैं और **गंगेशोपाध्याय** की **तत्त्वचिंतामणि** तथा उसपर आधारित परवर्ती विद्वानों की रचनाओं के विचार **प्रमाणप्रधान** हैं। प्रमेयप्रधान विचार वाले ग्रंथसमूह को 'प्राचीन न्याय' तथा प्रमाणप्रधान विचारवाले ग्रंथसमूह को **'नव्य न्याय'** कहा जाता है। प्राचीन न्याय की भाषा सरल और पदार्थविवेचन स्थूल है तथा नव्य न्याय की भाषा जटिल और पदार्थविवेचन सूक्ष्म है।

**भाष्य ग्रन्थ-**

न्यायसूत्र के पश्चात् का जो साहित्य उपलब्ध है, उन सबमें **वात्स्यायनकृत 'न्यायभाष्य'** का प्रथम स्थान माना जाता है। **न्यायभाष्य** पर **'न्यायवार्तिक'** नाम की एक टीका **'उद्योतकर'** ने लिखी है, जिसमें न्यायशास्त्र के प्रमेयों के सही स्वरूप को जानने की सर्वाधिक उपादेयता विद्यमान है। इनका काल भी ईसा की पाँचवीं-छठीं शताब्दी के आसपास ही है। उद्योतकर द्वारा रचित **'न्यायवार्तिक'** नामक टीका प्रकाशित होने के पश्चात् भी न्यायशास्त्र पर बौद्धों का आघात बन्द नहीं हुआ, जिसके कारण ख्यातिप्राप्त टीकाकार **वाचस्पति मिश्र** को न्यायवार्तिक के ऊपर भी एक टीका लिखनी पड़ी, जो **'न्यायवार्तिकतात्पर्यटीका'** के नाम से प्रसिद्ध अत्यधिक महत्त्वपूर्ण टीका है। विद्वानों ने वाचस्पति मिश्र का समय ईसा की **नवीं शताब्दी** मानी है। इन्होंने ही इस न्यायशास्त्र को शुद्ध एवं लिपिबद्ध किया। इसी शुद्धता के कारण ही आज यह लेखा-जोखा उपलब्ध है कि न्यायदर्शन में **5 अध्याय** तथा **10 आह्निक** हैं, **84 प्रकरण** एवं **528 सूत्र** हैं, **196 पद** एवं **8385 अक्षर** हैं।

# ॥न्यायसिद्धान्तमुक्तावली ॥

## ॥अथानुमानखण्ड: ॥

## ॥अनुमिति ॥

**"व्यापारस्तु परामर्श: करणं व्याप्तिधीर्भवेत्, ॥66 ॥**
**अनुमायां ज्ञायमानं लिङ्गं तु करणं न हि ।**
**अनागतादिलिङ्गेन न स्यादनुमितिस्तदा" ॥67 ॥**

**'अनुमिति'** रूप ज्ञान के लिये **'व्याप्ति'** का ज्ञान **'करण'** है और **'परामर्श'** रूप ज्ञान **'व्यापार'** है । प्राचीन नैयायिकों के अनुसार जो ज्ञायमान (अर्थात् वर्तमान काल में ज्ञान का विषयभूत) धूमादि (लिङ्ग) अनुमिति का करण है । उनका यह कथन ठीक नहीं है क्योंकि यदि ऐसा मान लिया जाए तो **'अनागतादिलिङ्ग'** (भूतकालिक और भविष्यत्-कालिक) हेतु के द्वारा अनुमिति नहीं हो पायेगी ।

## परामर्श

**"व्याप्यस्य पक्षवृत्तित्वधी: परामर्श उच्यते" ॥**

**'व्याप्ति'** से युक्त **'व्याप्य'** (धूम आदि) का **'पक्ष'** (पर्वत) आदि में रहने की जो स्थिति है, ऐसे ज्ञान को 'परामर्श' कहते हैं ।

## व्याप्ति

**"व्याप्ति: साध्यवदन्यस्मिन्नसम्बन्ध उदाहृत: ॥68 ॥**
**अथवा हेतुमन्निष्ठविरहाप्रतियोगिना ।**
**साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते" ॥69 ॥**

**'साध्य'** (जो धूमादि हेतु के द्वारा अनुमेय वह्नि आदि) से युक्त भिन्न स्थान पर **'हेतु'** (धूमादि) का सम्बन्ध न होना ही व्याप्ति कहलाता है । अर्थात् जहां पर **'साध्य'** और **'साधन'** का सम्बन्ध निश्चित हो वहीं पर व्याप्ति होती है । अथवा **'हेतु'** के अधिकरण में रहने वाले अभाव के **'अप्रतियोगी'** (अविरोधी) **'साध्य'** के साथ **'हेतु'** का एक ही अधिकरण में रहना 'व्याप्ति' है ।

## पक्ष

**"सिषाधयिषया शून्या सिद्धिर्यत्र न तिष्ठति ।**
**स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत्" ॥70 ॥**

**'साध्य'** सिद्ध (अनुमान) करने की इच्छा से शून्य सिद्धि जहां नहीं है, वह 'पक्ष' कहलाता है । अर्थात् जहां पर 'साधन' के द्वारा **'साध्य'** की सिद्धि की जाए उसे **'पक्ष'** कहते हैं । उस पक्ष में **'वृत्तित्व'** (आश्रय) के ज्ञान से अनुमिति होती है ।

## ॥हेत्वाभास ॥

**"अनैकान्तो विरुद्धश्चाऽप्यसिद्ध: प्रतिपक्षित: ।**
**कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा" ॥71 ॥**

**"हेतुवत् आभासन्त इति हेत्वाभासा:"**। जिनमें यथार्थत: हेतु न होते हुए भी सामान्यत: देखने पर हेतु का आभास होता हो, उन्हें हेत्वाभास कहते हैं । हेत्वाभास पाँच प्रकार का होता है -

(1) **अनैकान्त** (2) **विरुद्ध** (3) **असिद्ध**
(4) **सत्प्रतिपक्ष** (5) **कालात्ययापदिष्ट**

**(1) अनैकान्त (सव्यभिचार) हेत्वाभास-**

**"आद्य: साधारणस्तु स्यादसाधारणकोऽपर: ।**
**तथैवाऽनुपसंहारी त्रिधाऽनैकान्तिको भवेत्" ॥72 ॥**

अनैकान्तिक हेत्वाभास के तीन भेद हैं-

1. साधारण 2. असाधारण 3. अनुपसंहारी ।

**1. साधारण अनैकान्तिक हेत्वाभास-**

**"य: सपक्षे विपक्षे च भवेत्साधारणस्तु स:" ।**

किम् ?देवदत्तस्य आयुष्यमस्ति । व्याख्यानात्सर्वत्रार्थग्रहणम् । मद्रभद्रयोः पर्यायत्वादन्यतरो न पठनीयः ।

॥इति षष्ठी ॥

## ॥सप्तमी विभक्ति ॥

**सूत्रम्- आधारोऽधिकरणम् । 1/4/45**

**वृत्तिः-** कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकम् अधिकरणसंज्ञः स्यात्।

**हिन्दी-** कर्तृ कर्म से सम्बन्धित क्रिया के आधार की अधिकरणसंज्ञा होती है।

**सूत्रम्- सप्तम्यधिकरणे च । 2/3/36**

वृत्तिः- अधिकरणे सप्तमी स्यात् । चकाराद्दूरान्तिकार्थेभ्यः।

**हिन्दी-** अधिकरण (कारक) में सप्तमी विभक्ति होती है । सूत्र में चकार के ग्रहण से दूरान्तिकार्थों में भी सप्तमी विभक्ति होती है ।

**आधारस्त्रिधा-** औपश्लेषिको वैषयिकोऽभिव्यापकः च ।

**औपश्लेषिकः-** कटे आस्ते । स्थाल्यां पचति ।

**वैषयिकः-** मोक्षे इच्छास्ति ।

**अभिव्यापकः-** सर्वस्मिन्नात्मास्ति ।

**वनस्य दूरे अन्तिके वा । "दूरान्तिकार्थेभ्यः** (सू.605) इति विभक्तित्रयेण सह चतस्रोऽत्र विभक्तयः फलिताः।

**वार्तिक- "क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम्" ॥**

**हिन्दी-** क्तप्रत्ययान्त शब्द में इनि प्रत्यय लगाकर बने हुए शब्द के योग में उसके कर्म में सप्तमी होती है । **यथा- अधीती व्याकरणे** । अधीतमनेनेति विग्रहे "इष्टादिभ्यश्च"(सू.1888) इति कर्तरीनिः ॥

**वार्तिक- "साध्वसाधुप्रयोगे च" ॥**

**यथा- साधुः कृष्णो मातरि । असाधुर्मातुले ॥**

**वार्तिक- "निमित्तात्कर्मयोगे" ॥**

निमित्तमिह- **फलम् । योगः-** संयोगसमवायात्मकः ।

**हिन्दी-** जिस फल की प्राप्ति के लिए कोई क्रिया की जाती है, वह फल यदि उस क्रिया के कर्म से युक्त हो तो उसमें सप्तमी होती है।

**"चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः" ॥1 ॥**

(इति भाष्यम्) । हेतौ तृतीयाऽत्र प्राप्ता तन्निवारणार्थं इदम् । **सीमाऽण्डकोशः । पुष्कलको गन्धमृगः** । योगविशेषे किम् ? **वेतनेन धान्यं लुनाति ॥**

**सूत्रम्- यस्य च भावेन भावलक्षणम् । 2/3/37**

वृत्तिः- यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् ।

**हिन्दी-** जब किसी कार्य के हो जाने पर दूसरे कार्य का होना प्रतीत होता है तब जो कार्य हो चुकता है उसमें सप्तमी होती है ।

**यथा- गोषु दुह्यमानासु गतः** ॥ ।

वार्तिक- **"अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च"** ॥

यथा- 1. सत्सु तरत्सु असन्त आसते ।
2. असत्सु **तिष्ठत्सु सन्तस्तरन्ति** ।
3. सत्सु **तिष्ठत्सु असन्तस्तरन्ति** ।
4. असत्सु **तरत्सु सन्तस्तिष्ठन्ति** ।

**सूत्रम्- षष्ठी चानादरे । 2/3/38**

**वृत्तिः-** अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः ।

**हिन्दी-** जिसका अनादर करके कोई कार्य किया जाता है उसमें षष्ठी या सप्तमी होती है । **यथा- रुदति रुदतो वा प्राव्राजीत्** । रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः ॥

**सूत्रम्- स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च । 2/3/39**

**वृत्तिः-** एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः । **षष्ठ्यामेव** प्राप्तायां पाक्षिकसप्तम्यर्थं वचनम् । **यथा- गवां गोषु वा स्वामी । गवां गोषु वा प्रसूतः** । गा एवानुभवितुं जात इत्यर्थः ।

**सूत्रम्- आयुक्तकुशलाभ्यां चासेवायाम् । 2/3/40**

**वृत्तिः-** आभ्यां योगे षष्ठीसप्तम्यौ स्तस्तात्पर्येऽर्थे । आयुक्तो व्यापारितः ।

**यथा-** आयुक्तः **कुशलो वा हरिपूजने हरिपूजनस्य वा** । आसेवायां किम् ? **आयुक्तो गौः** शकटे । **ईषद्युक्त इत्यर्थः** ।

**यतश्च निर्धारणम् । 2/3/41**

**वृत्तिः-** जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं यतस्ततः षष्ठीसप्तम्यौ स्तः ।

**हिन्दी-** जब किसी वस्तु की अपने समुदाय से किसी विशेषण द्वारा कोई विशिष्टता दिखलाई जाती है तब समुदाय वाचक शब्द षष्ठी अथवा सप्तमी में रखा जाता है।

**यथा-**

1. **जाति** नृणां नृषु वा ब्राह्मणः श्रेष्ठः ।
2. **गुण** गवां गोषु वा कृष्णा बहुक्षीरा ।
3. **क्रिया** गच्छतां गच्छत्सु वा धावन् शीघ्रः।
4. **संज्ञा** छात्राणां छात्रेषु वा मैत्रः पटुः ॥

**सूत्रम्- पञ्चमी विभक्ते । 2/3/42**

**वृत्तिः-** विभागो विभक्तम् । निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात्। यथा- **माथुराः पाटलिपुत्रकेभ्य आढ्यतराः ॥**

**सूत्रम्- साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः । 2/3/43**

**वृत्तिः-** आभ्यां योगे सप्तमी स्यादर्चायाम् न तु प्रतेः प्रयोगे ।

**हिन्दी-** यथा- **मातरि साधुर्निपुणो वा** । अर्चायां किम् ? **निपुणो राज्ञो भृत्यः** । इह तत्त्वकथने तात्पर्यम् ।

**वार्तिक- "अप्रत्यादिभिरिति वक्तव्यम्" ॥**

**यथा-** साधुर्निपुणो वा मातरं प्रति पर्यनु वा ॥

**सूत्रम्- प्रसितोत्सुकाभ्यां तृतीया च । 2/3/44**

**वृत्तिः-** आभ्यां योगे तृतीया स्याच्चात्सप्तमी ।

यथा- प्रसित उत्सुको वा हरिणा हरौ वा ॥

**सूत्रम्- नक्षत्रे च लुपि । 2/3/45**

वृत्तिः- नक्षत्रे प्रकृत्यर्थे यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्य अर्थः तत्र वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणे । **यथा- मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्** ।मूले श्रवणे इति वा । **लुपि किम् ? पुष्ये शनिः ।**

**सूत्रम्- सप्तमीपञ्चम्यौ कारकमध्ये । 2/3/7**

वृत्तिः- शक्तिद्वयमध्ये यौ कालाध्वनौ ताभ्यामेते स्तः ।

हिन्दी- समय और मार्ग का अन्तर बतलाने वाले शब्दों में पञ्चमी और सप्तमी होती है । यथा- अद्य **भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता** । कर्तृशक्त्योर्मध्येऽयं कालः । **इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्** । कर्तृकर्मशक्त्योर्मध्येऽयं देशः । अधिकशब्देन योगे सप्तमीपञ्चम्याविष्येते **"तदस्मिन्नधिकम्..."**(सू.1846) इति **"यस्मादधिकम्..."**(सू.645) इति च सूत्रनिर्देशात् । उदाहरण यथा- **लोके लोकाद्वा अधिको हरिः ।**

।अगतित्वात् **"तिङि चोदात्तवति...**(सू.3978) इति निघातो न ॥

**॥इति सप्तमी ॥**

**सूत्रम्- अधिरीश्वरे । 1/4/97**

वृत्तिः- स्वस्वामिभावसम्बन्धेऽधिः कर्मप्रवचनीयसंज्ञः स्यात् ॥

**सूत्रम्- यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी । 2/3/9**

वृत्तिः- अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात् ।

यथा- उप परार्धे हरेर्गुणाः । परार्धादधिका इत्यर्थः । ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी । **उदाहरण यथा अधि भुवि रामः । अधि** रामे भूः । **"सप्तमी शौण्डैः"**(सू.717) इति समासपक्षे तु रामाधीना । **"अषडक्ष..."**(सू. 2079) इत्यादिना **खः** ॥

**सूत्रम्- विभाषा कृञि । 1/4/98**

वृत्तिः- अधिः करोतौ प्राक्संज्ञो वा स्यादीश्वरेऽर्थे । **यथा- यदत्र मामधिकरिष्यति** । विनियोक्ष्यत इत्यर्थः । इह विनियोक्तुरीश्वरत्वं गम्यते

**॥इति कारकप्रकरणम् ॥**

## परस्मैपद एवं आत्मनेपद -

**॥परस्मैपद ॥**

| सूत्र | उदाहरण |
|---|---|
| 1. अनुपराभ्यां कृञः | अनुकरोति । पराकरोति |
| 2. अभिप्रत्यतिभ्यः क्षिपः | अभिक्षिपति |
| 3. प्राद्वहः | प्रवहति |
| 4. परेर्मृषः | परिमृष्यति । |
| 5. व्याङ्परिभ्यो रमः | विरमति ॥ |
| 6. उपाच्च | उपरमति । उपरमयती |
| 7. विभाषाऽकर्मकात् | उपरमति । उपरमते वा |
| 8.बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः | बोधयति पद्मम् । योधयति काष्ठानि । नाशयति दुःखम् । जनयति सुखम् ।अध्यापयति वेदम् । प्रावयति । द्रावयति । स्रावयति । |
| 9. निगरणचलनार्थेभ्यश्च | निगारयति । आशयति । भोजयति चलयति । कम्पयति |
| 10.अणावकर्मकाच्चित्तवत्कर्तृकात् | शेते कृष्णस्तं गोपी शाययति। |
| 11. न पादम्याङ्यमाङ्यसपरिमुह रुचिनृतिवदवसः | (आ.) पाययते । दमयते । आयामयते । आयासयते । परिमोहयते । रोचयते । नर्तयते । वादयते । वासयते |

॥इति तिङन्तपरस्मैपदप्रकरणम् ॥

**॥आत्मनेपद ॥**

| सूत्र | उदाहरण |
|---|---|
| 1. अनुदात्तङित आत्मनेपदम् | आस्ते,शेते । |
| 2. भावकर्मणोः | बभूवे,अनुबभूवे । |
| 3. कर्तरि कर्मव्यतिहारे | व्यतिलुनीते । व्यतिस्ते । व्यतिषाते । व्यतिषते । |
| 4. न गतिहिंसार्थेभ्यः | व्यतिगच्छन्ति । व्यतिघ्नन्ति । |
| वा.-"प्रतिषेधे हसादीनामुपसंख्यानम्" । | व्यतिहसन्ति,व्यतिजल्पन्ति। |
| 5. इतरेतरान्योऽन्योपपदाच्च | व्यतिलुनन्ति ॥ |
| 6. नेर्विशः | निविशते । |
| 7. परिव्यवेभ्यः क्रियः | परिक्रीणीते,विक्रीणीते,अवक्रीणीते |
| 8. विपराभ्यां जेः | विजयते । पराजयते । |
| 9. आङो दोऽनास्यविहरणे | विद्यामादत्ते । |
| 10. क्रीडोऽनुसंपरिभ्यश्च | अनुक्रीडते।संक्रीडते । परिक्रीडते। आक्रीडते । |
| वा. "समोऽकूजने" | संक्रीडते । |
| वा. "शिक्षेर्जिज्ञासायाम्" | धनुषि शिक्षते । |
| वा. "आशिषि नाथः" | सर्पिषो नाथते । |
| वा. "हरतेर्गतताच्छील्ये" | पैतृकमश्वा अनुहरन्ते । |

| | |
|---|---|
| वा. "आङि नुप्रच्छ्योः" | आनुते । आपृच्छते ॥ |
| वा."शप उपालम्भे" | कृष्णाय शपते ॥ |
| 12. समवप्रविभ्यः स्थः | सन्तिष्ठते,समस्थित,समस्थिषातम्, समस्थिषत,अवतिष्ठते,प्रतिष्ठते वितिष्ठते । |
| वा. "आङः प्रतिज्ञायामुप-संख्यानम्" | शब्दं नित्यमातिष्ठते । |
| 13. प्रकाशनस्थेयाख्ययोश्च | गोपी कृष्णाय तिष्ठते। |
| 14. उदोऽनूर्ध्वकर्मणि | मुक्तावुत्तिष्ठते । |
| 15. उपान्मन्त्रकरणे | आग्नेय्याग्नीध्रमुपतिष्ठते । |
| वा."वालिप्सायामिति-वक्तव्यम्"। | भिक्षुकः प्रभुमुपतिष्ठते- उपतिष्ठति वा |
| 16. अकर्मकाच्च | भोजनकाले उपतिष्ठते । |
| 17- उद्विभ्यां तपः | उत्तपते । वितपते। |
| वा."स्वाङ्गकर्मकाच्चेतिवक्तव्यम्" | उत्तपते वितपते वा पाणिम् । |
| 18. आङो यमहनः | आयच्छते । आहते । |
| 19. आत्मनेपदेष्वन्यतरस्याम् | अवधीष्ट |
| 20. हनः सिच् | आहत,आहसाताम्,आहसत। |
| 21. यमो गन्धने | उदायत । |
| 22. समो गम्यृच्छिभ्याम् | संगच्छते । |
| 23. वा गमः | संगसीष्ट,समृच्छिष्यते,समगत, समगंस्त, संमृच्छते |
| वा.- "विदिप्रच्छिस्वरतीनामुप संख्यानम्" - | संवित्ते । संविदाते ॥ |
| 26. निसमुपविभ्यो ह्वः | निह्वयते । |
| 27. स्पर्धायामाङः | कृष्णश्चाणूरमाह्वयते । |
| 28.गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषुकृञः | उत्कुरुते । |
| 29. अधेः प्रसहने | शत्रुमधिकुरुते । |
| 30. वेः शब्दकर्मणः | स्वरान्विकुरुते |
| 31. अकर्मकाच्च | छात्रा विकुर्वते । |
| 32.संमाननोत्सर्जनाचार्यकरण-ज्ञानभृतिविगणनव्ययेषु नियः | शास्त्रे नयते । |
| 33. कर्तृस्थे चाशरीरे कर्मणि | क्रोधं विनयते । |
| 34. वृत्तिसर्गतायनेषु क्रमः | ऋचि क्रमते बुद्धिः,अध्ययनाय क्रमते । क्रमन्तेऽस्मिन् शास्त्राणि |
| 35. उपपराभ्याम् | उपक्रमते । पराक्रमते । |
| 36. आङ् उद्गमने | आक्रमते सूर्यः । उदयते इत्यर्थः |
| 37. वेः पादविहरणे | साधु विक्रमते वाजी । |
| 38. प्रोपाभ्यां समर्थाभ्याम् | प्रक्रमते । उपक्रमते । |

| | |
|---|---|
| 39. अनुपसर्गाद्वा क्रामति | क्रमते । |
| 40. अपह्नवे ज्ञः | शतमपजानीते । |
| 41. अकर्मकाच्च | सर्पिषो जानीते । |
| 42. संप्रतिभ्यामनाध्याने | शतं संजानीते । |
| 43. भासनोपसंभाषाज्ञानयत्न-विमत्युपमन्त्रणेषु वदः | शास्त्रे वदते । |
| 44. व्यक्तवाचां समुच्चारणे | संप्रवदन्ते ब्राह्मणाः । |
| 45. अनोरकर्मकात् | अनुवदते कठः कलापस्य । |
| 46. विभाषा विप्रलापे | विप्रवदन्ते विप्रवदन्ति वा वैद्याः । |
| 48. समः प्रतिज्ञाने | शब्दं नित्यं संगिरते । |
| 49. उदश्चरः सकर्मकात् | धर्ममुच्चरते । |
| 50. समस्तृतीयायुक्तात् | रथेन संचरते । |
| 51. दाणश्च सा चेच्चतुर्थ्यर्थे | दास्या संयच्छते । |
| 52. उपाद्यमः स्वकरणे | भार्यामुपयच्छते । |
| 53. विभाषोपयमने | रामः सीनामुपायत। उपायंस्त वा। |
| 54. ज्ञाश्रुस्मृदृशां सनः | जिज्ञासते । शुश्रूषते । सुस्मूर्षते। दिदृक्षते । |
| 55. नानोर्ज्ञः | पुत्रमनुजिज्ञासति । |
| 56. प्रत्याङ्भ्यां श्रुवः | प्रतिशुश्रूषति । आशुश्रूषति । |
| 57. पूर्ववत्सनः | एदिधिषते,शिशयिषते,निविविक्षते |
| 58. प्रोपाभ्यां युजेरयज्ञपात्रेषु | प्रयुङ्क्ते । उपयुङ्क्ते । |
| वा."स्वराद्यन्तोपसर्गादिति-वक्तव्यम्"॥ | उद्युङ्क्ते । नियुङ्क्ते । |
| 59. समः क्ष्णुवः | संक्ष्णुते शस्त्रम् । |
| 60. भुजोऽनवने | ओदनं भुङ्क्ते । |
| 61. णेरणौ यत्कर्म णौ चेत्स-कर्तानाध्याने | |
| 62. गृधिवञ्च्योः प्रलम्भने | माणवकं गर्धयते वञ्चयते वा । |
| 63. मिथ्योपपदात्कृञोऽभ्यासे | पदं मिथ्या कारयते । |
| 64. "स्वरितञितः कर्त्रभिप्राये-क्रियाफले" | यजते । सुनुते । |
| 65. अपाद्वदः | न्यायमपवदते । |
| 66. णिचश्च | कारयते । |
| 67. समुदाङ्भ्यो यमोऽग्रन्थे | व्रीहीन्संयच्छते । भारमुद्यच्छते । वस्त्रमायच्छते । |
| 68. अनुपसर्गाज्ज्ञः | गां जानीते । |
| 69. विभाषोपपदेन प्रतीयमाने | स्वं यज्ञं यजति यजते वा । स्वं कटं करोति कुरुते वा । स्वं पुत्रमपवदति अपवदते वा । स्वं यज्ञं कारयति कारयते वा । स्वं व्रीहिं संयच्छति संयच्छते वा। स्वां गां जानाति जानीते वा ॥ |

# ॥महाभाष्य ॥

**भाष्यम्-** "भाष्यते शब्दशास्त्रं येन इति भाष्यम्"।
**महाभाष्यम् व्युत्पत्ति-** "महच्च तद् भाष्यम् महाभाष्यम् व्याकरणस्य महाभाष्यम् व्याकरणमहाभाष्यम्"।
पतंजलि ने पाणिनि के अष्टाध्यायी के कुछ चुने हुए सूत्रों पर भाष्य लिखा जिसे व्याकरण महाभाष्य का नाम दिया (महा+भाष्य - समीक्षा, टिप्पणी, विवेचना, आलोचना)। महाभाष्य में (84) आह्निक है। व्याकरण महाभाष्य में कात्यायन वार्तिक भी सम्मिलित हैं जो पाणिनि के अष्टाध्यायी पर कात्यायन के भाष्य हैं। कात्यायन के वार्तिक कुल लगभग 1400 हैं जो अन्यत्र नहीं मिलते बल्कि केवल व्याकरण महाभाष्य में पतञ्जलि द्वारा सन्दर्भ के रूप में ही उपलब्ध हैं। इसकी रचना लगभग ईसापूर्व दूसरी शताब्दी में हुई थी। संस्कृत के तीन महान वैयाकरणों में पतंजलि भी हैं। अन्य दो हैं पाणिनि तथा कात्यायन । महाभाष्य में **शिक्षा, व्याकरण** और **निरुक्त** तीनों की चर्चा हुई है।

**रचनाकाल-**
इसकी रचना ईसा पूर्व दूसरी शताब्दी की मानी जाती है। महाभाष्यकार **"पतंजलि"** का समय असंदिग्ध रूप में ज्ञात है। **पुष्यमित्र शुंग** के शासनकाल में पतंजलि वर्तमान थे। महाभाष्य के निश्चित साक्ष्य के आधार पर विजयोपरांत पुष्यमित्र के श्रौत (अश्वमेध यज्ञ) में संभवतः पतंजलि पुरोहित थे। यह (इह पुष्यमित्रं याजयामः) महाभाष्य से सिद्ध है। साकेत और माध्यमिका पर यवनों के आक्रमणकाल में पतंजलि विद्यमान थे। अतः महाभाष्य और महाभाष्यकार पतंजलि दोनों का समय ईसा पूर्व **द्वितीय शताब्दी** निश्चित है। द्वितीय शताब्दी ई.पू. में मौर्यों के ब्राह्मण सेनापति पुष्यमित्र शुंग मौर्य वंशी बृहद्रथ को मारकार गद्दी पर बैठे थे। नाना पंडितों के विचार से 200 ई.पू. से लेकर 140 ई.पू. तक महाभाष्य की रचना का मान्य काल है।

**महाभाष्य का महत्व-**
महाभाष्य की महत्ता के अनेक कारण हैं। प्रथम हेतु है उसकी पांडित्यपूर्ण विशिष्ट व्याख्याशैली। विवादास्पद स्थलों का पूर्वपक्ष उपस्थित करने के बाद उत्तरपक्ष उपस्थित किया है। शास्त्रार्थ प्रक्रिया में पूर्व और उत्तर पक्षों का व्यवहार चला आ रहा है। इसके अतिरिक्त आवश्यक होने पर उस पक्ष का भी उपन्यास किया है। विषय प्रतिपादन दूसरी विशेषता है। महाभाष्य की व्याख्या का क्रम तो अष्टाध्यायी और तदंतर्गत चार पादों और उनके सूत्रों का क्रम है। पर भाष्य के अपने क्रम में व्याख्या का नियोजन विभक्त है, जिसका अर्थ यह भी होता है कि एक "महाभाष्य" लिखा जाता रहा। **"पतंजलि"** ने अपने महाभाष्य में व्याकरण की दार्शनिक **शब्दनित्यत्ववाद या स्फोटवाद** अथवा **शब्दब्रह्मवाद** का प्रतिपादन किया है। इस सिद्धांत को भर्तृहरि ने विस्तार से वाक्यपदीय में पल्लवित किया है। महाभाष्य की महत्ता का यह कारण है। साहित्यिक दृष्टि से महाभाष्य का गद्य अत्यन्त अकृत्रिम, मुहावरेदार, धाराप्रावाहिक और स्पष्टार्थबोध है। भर्तृहरि ने इस पर टीका लिखी थी पर उसका अधिकांश अनुपलब्ध है। **कैय्यट की "प्रदीप"** नामक टीका और **नागोजी** भट्ट ने **'उद्योत'** नाम से **"प्रदीपटीका"** प्रकाशित है। भट्टोजि दीक्षित ने अपने **"शब्दकौस्तुभ"** की रचना महाभाष्य के आधार पर की।
संस्कृत व्याकरण में "मुनित्रय" को बहुत ही उच्च और प्रामाणिक पद दिया गया है। अष्टाध्यायीकार पाणिनि, वार्तिककार कात्यायन और महाभाष्यकार पतंजलि इन्हीं तीनों को "मुनित्रय" कहा गया है। व्याकरणशास्त्र के इतिहास में पाणिनीय व्याकरण की शाखा के अतिरिक्त पूर्व और परवर्ती अनेक व्याकरण शाखाएँ रही हैं। परंतु **"मुनित्रय"** से पोषित और समर्थित व्याकरण की पाणिनीय शाखा को जो प्रसिद्धि, मान्यता और लोकप्रियता प्राप्त हुई वह अन्य शाखाओं को नहीं मिल सकी जिसका कारण महाभाष्य ही माना गया है। अष्टाध्यायी पर **"कात्यायन"** ने वार्त्तिकों की रचना द्वारा व्याकरणसिद्धांतों को अधिक पूर्ण और स्पष्ट बनाया। **"पतंजलि"** ने मुख्यतः वार्त्तिकों की व्याख्या को महाभाष्य द्वारा आगे बढ़ाया। अनेक स्थलों पर उन्होंने कात्यायनमत का प्रत्याख्यान और पाणिनिमत की मान्यता भी सिद्ध की है। कभी-कभी उन सूत्रों की भी विवेचना की है जो कात्यायन ने छोड़ दिए थे।

इस महाभाष्य की रचनापीठिका का निर्देश करते हुए वाक्यपदीयकार **"भर्तृहरि"** ने बताया है कि जब व्याकरण के पाठक संक्षेपरुचि और अल्पविद्यापरिग्रह बन गए, **"संग्रह"** ग्रंथ जिसके कर्ता परंपरा के अनुसार व्याडि हैं अस्त हो गया तब तीर्थदर्शी गुरु पतंजलि ने महाभाष्य की रचना की, जिसमें सभी न्यायबीजों का भी निबंधन है। इससे पता चलता है कि "पतंजलि" के पूर्व **"संग्रह"** नामक ग्रंथ में व्याकरण संबद्ध विवेचन अत्यंत विस्तृत था। "संग्रह" नामक ग्रंथ में एक लाख श्लोक होने का उल्लेख महाभाष्य तथा प्रदीप की टीका **'उद्योत'** में नागेश भट्ट ने किया है।

## ॥पस्पशाह्निकम् ॥

**अह्नानिर्वृत्तम्** = आह्निक, **पस्पशा**= प्रस्तावना ।

## ॥अथ शब्दानुशासनम् ॥

अथ इति अयम् शब्दः अधिकारार्थः प्रयुज्यते । **शब्दानुशासनं नाम** शास्त्रम् अधिकृतम् वेदितव्यम् । **केषाम् शब्दानाम् - लौकिकानाम्** वैदिकानाम् च ।
शब्दानुशासनम् में षष्ठी **कर्तृकर्मणो कृति से** प्राप्त है । यहां 'अथ' शब्द प्रारम्भ (अधिकार) अर्थ में प्रयुक्त हुआ हैं ।क्योंकि अथ शब्द के पांच अर्थ होते है । मंगल, अनन्तर, आरम्भ, प्रश्न और कार्त्स्न्य (परिपूर्णता)। **शब्दानुशासन** (पदशास्त्र) नामक शास्त्र यहां से प्रारम्भ होता है ऐसा जानना चाहिये । किस प्रकार के शब्दों का अनुशासन करना चाहिये ? लौकिक और वैदिक दोनों प्रकार के शब्दों का अनुशासन करना चाहिये।

**तत्र लौकिकाः तावत्-** गौः अश्वः पुरुषः हस्ती शकुनिः (पक्षी) मृगः ब्राह्मणः इति ।

**वैदिकाः खलु अपि-**

1. शम् नः देवीः अभिष्टये (अ.वे.1.1.1)
2. इषे त्वो ऊर्जे त्वा (य.वे.1.1.1)
3. अग्निम् ईळे पुरोहितम् (ऋ.वे.1.1.1)
4. अग्न आयाहि वीतये इति (सा.वे.1.1.1)

### अथ गौः इति अत्र कः शब्दः ।

**द्रव्यम्-** किम् यत् तत् सास्नालाङ्गूलककुदखुरविषाणि अर्थरूपम् सः शब्दः । न इति आह । द्रव्यम् नाम तत् ।

**क्रिया-** यत् तर्हि तत् इङ्गितम् चेष्टितम् निमिषितम् सः शब्दः । न इति आह । क्रिया नाम सा ।

**गुणः-** यत् तर्हि तत् शुक्लः नीलः कृष्णः कपिलः कपोतः इति सः शब्दः । न इति आह । गुणः नाम सः ।

**आकृतिः-** यत् तर्हि तत् भिन्नेषु अभिन्नम् छिन्नेषु अच्छिन्नम् सामान्यभूतम् सः शब्दः । न इति आह । आकृतिः नाम सा ।

### शब्द की परिभाषा-

**कः तर्हि शब्दः ? येन उच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनाम् सम्प्रत्ययः भवति सः शब्दः । अथ वा प्रतीतपदार्थकः लोके ध्वनिः शब्दः इति उच्यते । तत् यथा - शब्दम् कुरु मा शब्दम् कार्षीः शब्दकारी अयम् माणवकः इति । ध्वनिम् कुर्वन् एवम् उच्यते । तस्मात् ध्वनिः शब्दः ।**

जो उच्चरित ध्वनियों से अभिव्यक्त होकर गलकम्बल, पूँछ, कुहान, खुर, सींग वाले गो व्यक्तियों का बोध कराता है वह शब्द है, अथवा लोक व्यवहार में जिस ध्वनि से अर्थ का बोध होता है वह शब्द कहलाता है।

## व्याकरण अध्ययन के पाँच मुख्य प्रयोजन-

**"रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" ।।**

**1. रक्षा ।**

रक्षार्थं वेदानामध्येयं व्याकरणम् **लोपागमवर्णविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यतीति** ।। उदाहरण- देवा अदुह्र।

**2. ऊह ।**

ऊहः खल्वपि न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः। ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः। तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम्। तस्मादध्येयं व्याकरणम् ।।

**3. आगम ।**

आगमैः खल्वपि ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च इति। प्रधानं च षड्वङ्गेषु व्याकरणम्। **प्रधाने च कृतो यत्नः फलवान्भवति।**

**4. लघु ।**

लघ्वर्थं चाध्येयं व्याकरणम् ब्रह्मणेनावश्यं शब्दा ज्ञेया इति। न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या ज्ञातुम् ।।

**5. असन्देह ।**

असन्देहार्थं चाध्येयं व्याकरणम्। याज्ञिकाः पठन्ति स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत इति। तस्यां सन्देहः स्थूला चासौ पृषती च स्थूलपृषति, स्थूलानि पृषन्ति यस्याः सेयं स्थूलपृषतीति। तां नावैयाकरणः स्वरतोऽध्यवस्यति यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति ।।

- **स्थूलपृषती समास-**
  (1) पूर्वपदप्रकृतिस्वरत्वं- **बहुव्रीहिः**
  (2) अन्तोदात्वं- **तत्पुरुषः** ।
- अथ गौरित्यत्र **ध्वनिः शब्दः**।
- **गौ शब्दस्यापभ्रंशाः-** गावी, गोणी, गोता गोपोतलिका
- चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति- **आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति।**

### व्याकरण अध्ययन के तेरह गौण उद्देश्य-

**गौण प्रयोजन- (13)** (आनुषङ्गिक प्रयोजन)

1. तेऽसुरा, 2. दुष्टः शब्दः, 3 यदधीतम्,
4. यस्तु प्रयुङ्क्ते, 5. अविद्वांसः, 6.विभक्तिं कुर्वन्ति,
7. यो वा इमाम्, 8. चत्वारि, 9. उत त्वः,
10. सक्तुमिव, 11. सारस्वतीम, 12.दशम्यां पुत्रस्य
13. सुदेवोऽसि वरुणेति

**(1) तेऽसुरा-**

ते असुराः हेलयः हेलयः इति कुर्वन्तः परा बभूवुः । तस्मात् ब्राह्मणेन न म्लेच्छितवै न अपभाषितवै । म्लेच्छः ह वै एषः यत् अपशब्दः । **म्लेच्छ**=अपशब्द, उदा.- हेलयो हेलयः।

**(2) दुष्टः शब्दः-**

**दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह।**
**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ।।**

दुष्टान् शब्दान् मा प्रयुक्ष्महि इति अध्येयम् व्याकरणम् ।

**(3) यदधीतम्-**

**यदधीतमविज्ञातं निगदेनैव शब्द्यते।**
**अनग्नाविव शुष्कैधोनतज्ज्वलतिकर्हिचित् ।।**

तस्मात् अनर्थकम् मा अधिगीष्महि इति अध्येयम् व्याकरणम्।

**(4) यस्तु प्रयुङ्क्ते-**

**यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले।**
**सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः**

यदुदुम्बरवर्णानां घटीनां मण्डलं महत्।
पीतं न गमयेत्स्वर्गं किं तत् क्रतुगतं नयेत् ।।

(5) अविद्वांसः-

**अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः।**
**कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ।।**

अभिवादे स्त्रीवत् मा भूम इति अध्येयम् व्याकरणम् ।

**(6) विभक्तिं कुर्वन्ति-**

याज्ञिकाः पठन्ति **प्रयाजाः सविभक्तिकाः कार्याः इति** । न च अन्तरेण व्याकरणम् प्रयाजाः सविभक्तिकाः शक्याः कर्तुम् ।

**(7) यो वा इमाम्-**

यः वै इमाम् पदशः स्वरशः अक्षरशः वाचम् विदधाति सः आर्त्विजीनः । **आर्त्विजीनाः स्याम इति अध्येयम् व्याकरणम् ।**

**(8) चत्वारि -**

**"चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।**
**त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यान् आविवेश" ।।**

**चत्वारि श्रृंगाणि** (1) नाम, (2) आख्यात, (3) उपसर्ग, (4) निपात
**त्रयो पादाः** – (1) भूत (2) भविष्य (3) वर्तमान
**द्वे शीर्षे द्वौ शब्दात्मानौ** (1) नित्यः (2) कार्य (अनित्य)
**सप्त हस्ताः सप्त विभक्तयः।**
**त्रिधा बद्ध** (1) उरसि (2) कण्ठ (3) शिरसि
**रोरवीति**- शब्दं करोति (वृषभों वर्षणात) महां देवों मर्त्या आविवेश।

"चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति"।।

**शब्द के चार स्थान**- परा, पश्यन्ति, मध्यमा, वैखरी।
**तुरीयं वाचो मनुष्या वदन्ति** । इनमें से चतुर्थ वैखरी वाणी को मनुष्य बोलते हैं ।

**(9) उत त्वः-**

**"उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।**
**उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उसती सुवासाः" ।।**

वाङ्मो विवणुयादात्मानमित्यध्येये व्याकरणम्।

**(10) सक्तुमिव-**

**"सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।**
**अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीः निहिताऽधि वाचि" ।।**

(11) **सारस्वतीम्-**

याज्ञिकाः पठन्ति आहिताग्निः अपशब्दम् प्रयुज्य प्रायश्चित्तीयाम् सारस्वतीम् इष्टिम् निर्वपेत् इति । **प्रायश्चित्तीयाः मा भूम इति अध्येयम् व्याकरणम् ।**

(12) **दशम्यां पुत्रस्य-**

याज्ञिकाः पठन्ति दशम्युत्तरकालम् पुत्रस्य जातस्य नाम विदध्यात् घोषवदादिं अन्तरन्तःस्थम् अवृद्धम् त्रिपुरुषानूकम् अनरिप्रतिष्ठितम् । तत् हि प्रतिष्ठिततमम् भवति । **द्व्यक्षरम् चतुरक्षरम् वा नाम कृतम् कुर्यात् न** तद्धितम् इति । न च अन्तरेण व्याकरणम् कृतः तद्धिताः वा शक्याः विज्ञातुम् ।

(13) **सुदेवोऽअसि वरुणेति-**

सुदेवः असि वरुण यस्य ते सप्त सिन्धवः **अनुक्षरन्ति काकुदम् सूर्म्यम् सुषिरामिव । काकुदं**- तालु, **काकु**- जिह्वा।

उक्तः शब्दः । **स्वरूपम् अपि उक्तम् । प्रयोजनानि अपि उक्तानि । शब्दानुशासनम् इदानीम् कर्तव्यम् । तत् कथम् कर्तव्यम् । किम् शब्दोपदेशः कर्तव्यः** आहोस्वित् **अपशब्दोपदेशः आहोस्वित् उभयोपदेशः इति । अन्यतरोपदेशेन कृतम् स्यात् ।**

तत् यथा भक्ष्यनियमेन अभक्ष्यप्रतिषेधो गम्यते । पञ्च **पञ्चनखाः** भक्ष्याः इति उक्ते गम्यते एतत् अतः अन्ये अभक्ष्याः इति । **अभक्ष्यप्रतिषेधेन** वा भक्ष्यनियमः । **तत् यथा अभक्ष्यः ग्राम्यकुक्कुटः** अभक्ष्यः ग्राम्यशूकरः इति उक्ते गम्यते एतत् आरण्यः भक्ष्यः इति । एवम् इह अपि यदि तावत् शब्दोपदेशः क्रियते गौः इति एतस्मिन् उपदिष्टे गम्यते एतत् गाव्यादयः अपशब्दाः इति । अथ अपशब्दोपदेशः क्रियते गाव्यादिषु उपदिष्टेषु गम्यते एतत् गौः इति एषः शब्दः इति । किम् पुनः अत्र ज्यायः । **लघुत्वात् शब्दोपदेशः** । लघीयान् शब्दोपदेशः गरीयान् अपशब्दोपदेशः । एकैकस्य शब्दस्य बहवः अपभ्रंशाः । **तत् यथा-** गौः इति अस्य शब्दस्य **गावीगोणीगोतागोपोतलिकादयः अपभ्रंशाः** । इष्टान्वाख्यानम् खलु अपि भवति ।

**अथ एतस्मिन् शब्दोपदेशे सति किम्** शब्दानाम् प्रतिपत्तौ प्रतिपदपाठः कर्तव्यः गौः अश्वः पुरुषः हस्ती शकुनिः मृगः ब्राह्मणः इति एवमादयः शब्दाः पठितव्याः । न इति आह । **अनभ्युपायः एषः शब्दानाम् प्रतिपत्तौ प्रतिपदपाठः** ।

एवम् हि श्रूयते बृहस्पतिः इन्द्राय दिव्यम् वर्षसहस्रम् प्रतिपदोक्तानाम् शब्दानाम् शब्दपारायणम् प्रोवाच न अन्तम् जगाम । बृहस्पतिः च प्रवक्ता इन्द्रः च अध्येता दिव्यम् वर्षसहस्रम् अध्ययनकालः न च अन्तम् जगाम ।किम् पुनः अद्यत्वे । यः सर्वथा चिरम् जीवति सः वर्षशतम् जीवति ।

**चतुर्भिः च प्रकारैः विद्या उपयुक्ता भवति-**
**1-आगमकालेन 2-स्वाध्यायकालेन 3- प्रवचनकालेन 4-व्यवहारकालेन इति ।**

तत्र च आगमकालेन एव आयुः पर्युपयुक्तम् स्यात् । तस्मात् अनभ्युपायः शब्दानाम् प्रतिपत्तौ प्रतिपदपाठः ।

**कथम् तर्हि इमे शब्दाः प्रतिपत्तव्याः** ।

किम् चित् सामन्यविशेषवत् लक्षणम् प्रवर्त्यम् येन अल्पेन यत्नेन महतः महतः शब्दौघान् प्रतिपद्येरन् । किम् पुनः तत् । **उत्सर्गापवादौ** । कः चित् उत्सर्गः कर्तव्यः कः चित् अपवादः । **कथञ्जातीयकः पुनः उत्सर्गः कर्तव्यः कथञ्जातीयकः अपवादः** ।

**1-सामन्येन उत्सर्गः कर्तव्यः**-यथा कर्मण्यण्।
**2- विशेषेण अपवादः**-यथा-आतः अनुपसर्गे कः ।

**किम् पुनः** आकृतिः पदार्थः **आहोस्वित्** द्रव्यम् ?
उभयम् इति आह । कथम् ज्ञायते । **उभयथा हि आचार्येण सूत्राणि पठितानि ।**
**आकृतिम् पदार्थम् मत्वा-** जात्याख्यायाम् एकस्मिन् बहुवचनम् अन्यतरस्याम् इति **उच्यते द्रव्यम् पदार्थम् मत्वा-**सरूपाणाम् एकशेषः एकविभक्तौ इति एकशेषः आरभ्यते ।

## शब्द और अर्थ का संबंध-

**किम् पुनः** नित्यः शब्दः **आहोस्वित्** कार्यः ? सङ्ग्रहे एतत् प्राधान्येन परीक्षितम् नित्यः वा स्यात् कार्यः वा इति । तत्र उक्ताः दोषाः प्रयोजनानि अपि उक्तानि । तत्र तु एषः निर्णयः यदि एव नित्यः अथ अपि कार्यः **उभयथा अपि लक्षणम् प्रवर्त्यम् इति** । कथम् पुनः इदम् भगवतः पाणिनेः आचार्यस्य लक्षणम् प्रवृत्तम् ।

### ॥सिद्धे शब्दार्थ सम्बन्धे॥

सिद्धे शब्दे अर्थे सम्बन्धे च इति । **अथ सिद्धशब्दस्य कः पदार्थः**-नित्यपर्यायवाची सिद्धशब्दः । कथम् **ज्ञायते-** यत् कूटस्थेषु अविचालिषु भावेषु वर्तते । **तद्यथा-** सिद्धा द्यौः , सिद्धा पृथिवी सिद्धम् आकाशम् इति । **ननु च भोः कार्येषु** अपि वर्तते **-तत् यथा-**सिद्धः ओदनः , सिद्धः सूपः सिद्धा यवागूः इति ।
यह कात्यायन का प्रथम वार्तिक है। सिद्ध शब्द नित्यपर्यायवाची है ।
**सिद्ध शब्द का नित्य अर्थ-** सिद्धाः द्यौः, सिद्धा पृथिवी, सिद्धमाकामम्।
**सिद्ध शब्द का कार्य अर्थ -** सिद्धः: ओदनः, सिद्धः सूपः, सिद्धा यवागू ।
सिद्धे इस पद में पूर्वपदलोप है- **अत्यन्तसिद्धः- सिद्ध । यथा-** देवदत्तो-दत्तः, सत्यभामा- भामा। सिद्ध शब्द के स्थान पर नित्य शब्द का प्रयोग **मङ्गलार्थ** के उद्देश्य से नहीं किया है । नित्य शब्द का प्रयोग आभीक्ष्ण्य अर्थ में किया जाता है । **यथा-** नित्य प्रहसितो, (अधिक हंसने वाला) नित्यप्रजल्पित । व्याकरण में **आकृति** (जाति) और **द्रव्य** दोनों नित्य होते हैं ।

**नित्यलक्षणम्-**ध्रुवंकूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्धपाव्यययोगि यत्तन्नित्यम् ।
**प्रश्न-** अथ कम् पुनः **पदार्थम्** मत्वा **एषः विग्रहः क्रियते सिद्धे शब्दे अर्थे सम्बन्धे च इति** ?
**उत्तर-** यत् नित्यम् तम् पदार्थम् मत्वा एषः विग्रहः क्रियते सिद्धे शब्दे अर्थे सम्बन्धे च इति ।
**प्रश्न-** कथम् पुनः ज्ञायते **सिद्धः शब्दः अर्थः सम्बन्धः च इति ?**
**उत्तर- लोकतः**- यत् लोके अर्थम् उपादाय शब्दान् प्रयुञ्जते ।

**प्रश्न-** यदि तर्हि लोकः एषु **प्रमाणम्** किम् **शास्त्रेण क्रियते ?**

**उत्तर-** "लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः" ।

**किम् इदम् धर्मनियमः इति-** 1. धर्माय नियमः धर्मनियमः 2. धर्मार्थः वा नियमः धर्मनियमः 3. धर्मप्रयोजनः वा नियमः धर्मनियमः। **"प्रियतद्धिता दाक्षिणात्याः"। यथा-** दक्षिण में 'लोके वेदे च' इस स्थान पर वे लौकिकवैदिकेषु अथवा **लौकिकेषु कृतान्तेषु** उच्चारण करते हैं। **भक्ष्य लक्षण- "भक्ष्यं नाम क्षुत्प्रतीघातार्थमुपादीयते"**। शक्यम् च अनेन श्वमांसादिभिः अपि क्षुत् प्रतिहन्तुम् । तत्र **नियमः क्रियते-** इदम् भक्ष्यम् । इदम् अभक्ष्यम् इति ।

## वेद में नियम-

**ब्राह्मण-** पयोव्रतो ब्राह्मणो।
**क्षत्रिय-** यवागूव्रतो राजन्यः।
**वैश्य-** आभिक्षाव्रतो वैश्यः। (आभिक्षा- छेना)
**व्रत-** व्रतं च नामाभ्यवहारार्थमुपादीयते। (भोजन अर्थ में)
**यूप-** यूपश्च नाम पश्वनुबन्धनार्थमुपादीयते।

### ॥अस्त्यप्रयुक्तः॥

**अप्रयुक्त शब्द** उष, तेर, चक्र, पेच आदि। "लोके अप्रयुक्ताः"।

### ॥अप्रयोग प्रयोगान्यायत्वात्॥

**उष शब्दस्याऽर्थः-** क्व यूयमुषिता।
**तेर शब्दस्यार्थः-** क्व यूयं तीर्णाः।
**चक्र शब्दस्यार्थः-** क्व यूयं कृतवन्तः।
**पेच शब्दस्यार्थः-** क्व यूयं पक्वन्त।

### ॥अप्रयुक्ते दीर्घसत्रवत्॥

उषतेरादि शब्द अप्रयुक्त हैं फिर भी इन्हें **दीर्घसत्र** के समान अवश्य ही लक्षण के द्वारा समझना चाहिये।

### ॥सर्वे देशान्तरे॥

उष्, तेर आदि शब्दों का प्रयोग दूसरे देशों में होता है। **"सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गा सरस्या बहुधा विभिन्नाः" । "एकशतमध्वर्युशाखा, सहस्त्रवर्त्मासामवेदः, एकविंशतिधा बाह्वृच्यं, नवधाथर्वणो वेदः"**। वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावाञ्शब्दस्य प्रयोगविषयः। **वाकोवाक्य-** (उक्ति प्रत्युक्ति रूप ग्रन्थ)
उष, तेर,चक्र आदि अप्रयुक्त शब्दों का वेदों में प्रयोग-
1 सप्तास्ये रेवतीरेवदूष।
2 यद्वो रेवती रेवत्य तमूष।
3 यन्मे नरः श्रुत्यं ब्रह्म चक्र।
4 यत्र नश्चक्रा जरसं तनूनाम्।

## साधु शब्दों के प्रयोग का परिणाम-

**प्रश्न- किम् पुनः शब्दस्य ज्ञाने धर्मः आहोस्वित् प्रयोगे ?**

**ज्ञाने धर्मः इति चेत् तथा अधर्मः ।** ज्ञाने धर्मः इति चेत् तथा अधर्मः प्राप्नोति । यः हि शब्दान् जानाति अपशब्दान् अपि असौ जानाति । भूयांसः अपशब्दाः अल्पीयांसः शब्दाः । एकैकस्य शब्दस्य बहवः अपभ्रंशाः । **तत् यथा- गौः इति** अस्य-गावी गोणी गोता गोपोतलिका इति एवमादयः अपभ्रंशाः ।

**आचारे नियमः**- आचारे पुनः ऋषिः नियमम् वेदयते । ते असुराः हेलयः हेलयः इति कुर्वन्तः पराबभूवुः इति ।

**अस्तु तर्हि प्रयोगे । प्रयोगे सर्वलोकस्य**- यदि प्रयोगे धर्मः सर्वः लोकः अभ्युदयेन युज्येत । कः च इदानीम् भवतः मत्सरः यदि सर्वः लोकः अभ्युदयेन युज्येत । न खलु कः चित् मत्सरः । प्रयत्नानर्थक्यम् तु भवति । **फलवता च नाम प्रयत्नेन भवितव्यम् न च प्रयत्नः फलात् व्यतिरेच्यः ।**

**प्रश्न- एवम् तर्हि न अपि ज्ञाने एव धर्मः न अपि प्रयोगे एव । किम् तर्हि ?**

**उत्तर - शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत् तुल्यं वेदशब्देन** । व्याकरण वेद के समान है। अपशब्द ज्ञान में कोई अधर्म नहीं है ।यथा- हिक्कितहसितकण्डूयितानि न एव दोषाय भवन्ति न अपि अभ्युदयाय । अथ वा अभ्युपायः एव अपशब्दज्ञानम् शब्दज्ञाने । यः अपशब्दान् जानाति शब्दान् अपि असौ जानाति । तत् एवम् ज्ञाने धर्मः इति ब्रुवतः अर्थात् आपन्नम् भवति **अपशब्दज्ञानपूर्वके शब्दज्ञाने धर्मः इति** । **अथ वा कूपखानकवत् एतत् भवति ।**

## व्याकरण की परिभाषा-

**प्रश्न-** अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थः?

**उत्तर - सूत्रम् ।**

व्याकरण का अर्थ सूत्र मानने में दो दोष उपस्थित होते हैं-

### (1) ॥सूत्रे व्याकरणेषष्ठ्यर्थोऽनुपपन्नः॥

व्याकरण का अर्थ सूत्र मानने पर षष्ठी तत्पुरुष समास नहीं होगा ।

### (2) ॥शब्दाप्रतिपत्तिः॥

व्याकरण का अर्थ सूत्र मानने पर शब्दों का बोध भी नहीं होगा, हम व्याकरण से शब्दों को जानते है ऐसा व्यवहार भी न बन सकेगा सूत्र मात्र से तो शब्दों को जानते नहीं हैं अपितु उन्हें केवल व्याख्यान से जानते हैं । सूत्रों से शब्दों का ज्ञान नहीं होता है बल्कि व्याख्यान सहित सूत्र से शब्द ज्ञान होता है। वह सूत्र ही खुलकर व्याख्यान बनता है ।

**व्याख्यान लक्षण- उदाहरणं प्रत्युदाहरणं वाक्याध्याहारं इत्येतत्समुदितं व्याख्यानं भवति।**

**एवम् तर्हि शब्दः ।** यदि व्याकरण शब्द का अर्थ शब्द माना जाये तो तीन दोष उपस्थित होते हैं-

### 1. ॥शब्दे ल्युडर्थः॥

यदि व्याकरण शब्द का अर्थ शब्द माना जाये तो ल्युडर्थ संगत नहीं होगा। यदि व्याकरण शब्द का अर्थ शब्द माना जाता है तो व्याकरण शब्द में ल्युट प्रत्यय संगत नहीं होगा क्योंकि **"व्याक्रियन्ते शब्दा अनेनेति व्याकरणम्"**। शब्द की व्युत्पत्ति "सूत्र" से नही की जाती है।

### 2. ॥भवे च तद्धितः॥

शब्द को व्याकरण का अर्थ मानने पर भव अर्थ में तद्धित प्रत्यय नहीं होगा। **"व्याकरणे भवो योगो वैयाकरणः"** यह प्रयोग नहीं बनेगा यह योग केवल व्याकरण (सूत्र) में होता है।

### 3. ॥प्रोक्तादयश्च तद्धिताः॥

प्रोक्त आदि अर्थ में विद्यमान तद्धित आदि प्रत्ययों का विधान नहीं होगा। **यथा- पाणिनिना प्रोक्तं पाणिनीयम्**, आपिशलं, काशकृत्स्नमिति। ल्युट प्रत्यय केवल करण और अधिकरण में ही नहीं होता है 'कृत्यल्युटो बहुलम्' इस सूत्र से ल्युट् प्रत्यय का विधान कर **प्रस्कन्दनम् प्रपतनम्** आदि प्रयोग निष्पन्न होते हैं।

**प्रश्न-** अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थः?

### ॥लक्ष्यलक्षणे व्याकरणम्॥

शब्द और सूत्र इन दोनों का समुदित रूप ही व्याकरण है।

**लक्ष्य-** शब्द, **लक्षण-** सूत्र, **समुदायेषु शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते। यथा-** पूर्वे पाञ्चालाः, उत्तरे पाञ्चालाः, तैलं भुक्तं, घृतं भुक्तं, शुक्लो, नीलः, कपिलः, कृष्णः। **सूत्रत एव हि शब्दान् प्रतिपद्यन्ते ।** शब्दों का बोध सूत्रों से ही होता है ।

## ॥वर्णानामुपदेशः॥

**किमर्थो वर्णानामुपदेशः-**

(1) वृत्तिसमवायार्थ (2) अनुबन्धकरणार्थश्च । (3) इष्टबुद्ध्यर्थश्च वर्णानामुपदेशः ।

### 1. वृत्तिसमवायार्थ उपदेशः

**1. वृत्तिसमवायार्थः उपदेशः - वृत्तिसमवायार्थः वर्णानाम् उपदेशः कर्तव्यः।** वृत्तिसमवाय के लिये वर्णों का उपदेश किया जाता है । **किम् इदम् वृत्तिसमवयार्थः इति ।**

1. वृत्तये समवायः वृत्तिसमवायः ।
2. वृत्त्यर्थः वा समवायः वृत्तिसमवायः ।
3. वृत्तिप्रयोजनः वा वृत्तिसमवयः ।

**का पुनः वृत्तिः**- शास्त्रप्रवृत्तिः । **अथ कः समवायः**- वर्णानाम् आनुपूर्व्येण सन्निवेशः (वर्णों का क्रम से रखना) । **अथ कः उपदेशः**- उच्चारणम् ।

### 2. अनुबन्धकरणार्थश्च वर्णानामुपदेशः।

अनुबन्ध लगाने के लिये भी वर्णों का उपदेश किया जाता है । इन दोनों का प्रयोजन प्रत्याहार की सिद्धि है। **सः एषः वर्णानाम् उपदेशः वृत्तिसमवायार्थः च अनुबन्धकरणार्थः च । वृत्तिसमवायः च**

**अनुबन्धकरणार्थः** च प्रत्याहारार्थम् । **प्रत्याहारः वृत्त्यर्थः** । यह वर्णों का उपदेश वृत्तिसमवाय और अनुबन्ध लगाने के लिये है । वृत्तिसमवाय और अनुबन्ध लगाना प्रत्याहार के लिये आवश्यक है, और प्रत्याहार शास्त्रप्रवृत्ति के लिये आवश्यक है ।

### 3. इष्टबुद्ध्यर्थश्च

इष्ट वर्णों के बोधन के लिए भी वर्णों का उपदेश करना चाहिए ।

**वा. - उदात्तानुदात्तस्वरितानुनासिक्दीर्घप्लुतानाम् अपि उपदेशः ॥ इष्टबुद्ध्यर्थः च इति चेत् उदात्तानुदात्तस्वरितानुनासिक्दीर्घप्लुतानाम् अपि उपदेशः कर्तव्यः** । इष्ट वर्णों के उपदेश के लिए वर्णों का उपदेश मानते हो तो उपरोक्त उदात्तादि का भी उपदेश करना चाहिए ।

### ॥आकृत्युपदेशात् सिद्धम् ॥

उदात्त, अनुदात्त, स्वरित का उपदेश जाति के उपदेश से सिद्ध है।

**आकृति**=जाति ।

**वा. - आकृत्युपदेशात् सिद्धमिति चेत्संवृतादीनां प्रतिषेधः**। आकृति उपदेश से यदि इष्टसिद्धि मानते हो तो संवृतादि दोषों का प्रतिषेध करना चाहिए ।

**संवृतादि दोष – (12)**

| | | | |
|---|---|---|---|
| (1) संवृत | (2) कल | (3) ध्मात | (4) एणीकृत |
| (5) अम्बूकृत | (6) अर्धक | (7) ग्रस्त | (8) निरस्त |
| (9) प्रगीत | (10) उपगीत | (11)क्ष्विण्णो | (12) रोमश। |

स्वरदोष=12,

**"ग्रस्तं निरस्तमविलम्बितं निर्हतम्मबूकृतं ध्मातमथो विकम्पितम्।**
**सन्दष्टमेणीकृतमर्द्धकं द्रुतं विकीर्णमेताः स्वरदोषभावना"**।।

**वा. - गर्गादिबिदादिपाठात् संवृतादीनां निवृत्तिर्भविष्यति** । गर्गादिगण तथा बिदादिगण के पाठ से संवृतादि की निवृत्ति हो जाएगी ।

गर्गादिबिदादि गणपाठ का अन्य प्रयोजन गर्गादि समुदायों का साधुत्व बतलाना है ।

### ॥लिङ्गार्था तु प्रत्यापत्ति ॥

**यदनुबन्धै क्रियते, तत्कलादिभिः करिष्यते**। जिन कार्यों का विधान अनुबन्ध के द्वारा होता है उन समस्त कार्यों का समाधान कल आदि के द्वारा हो जाएगा ।

द्विगताऽपि हेतवो भवन्ति- **आम्रा सिक्ताः, पितरश्च प्रीणिताः**।

द्व्यर्थक वाक्य- **श्वेतो धावति, अलम्बुसानां माता**।

आचार्य ने प्रत्यय, आदेश व धातु इनका उच्चारण शुद्ध किया है इसलिये इनमें कलत्व आदि दोष की प्राप्ति नहीं होगी। गर्गादिगण से समुदाय की सिद्धि एवं कलत्व आदि दोषों का निवारण हो जाता है।

**क्वेमे संवृतादयः श्रूयेरन्-**

**आगमेषु-** आगमाः शुद्धाः पठ्यन्ते।

**विकारेषु तर्हि-** विकाराः अपि शुद्धाः पठ्यन्ते।

**प्रत्ययेषु तर्हि-** प्रत्ययाः अपि शुद्धाः पठ्यन्ते।

**धातुषु तर्हि-** धातवोऽपि शुद्धाः पठ्यन्ते।

**प्रतिपादिकेषु तर्हि-** प्रातिपदिकान्यपि शुद्धाः पठ्यन्ते।

यानि तर्ह्यग्रहणानि प्रातिपादिकानि? एतेषामपि स्वरवर्णानुपूर्वीज्ञानार्थं उपदेशः कर्त्तव्यः। **'शशः' 'षषः'** इति मा भूत् । **'पलाशः' 'पलाषः'** इति मा भूत् । **'मञ्चकः' 'मञ्चकः'** इति मा भूत् । आगमाः च विकाराः च प्रत्ययाः सह धातुभिः उच्चार्यन्ते ततः तेषु न इमे प्राप्ताः कलादयः ।

### महाभाष्य के मुख्य सन्दर्भ-

- द्वितीय आह्निक- **व्यवहाराह्निक**।
- **अथैकत्वादेकं वाक्य साकाक्षं वेद**- पतञ्जलि।
- **पदसमूहो वाक्यम् अर्थसमापत्तौ**- वात्स्यायन।
- महाभाष्य पर **"प्रदीप"** टीका कैय्यट ने लिखी जिसकी अनेक विद्वानों ने व्याख्या की ।
- **प्रदीपोद्योत** नागेश भट्ट के द्वारा प्रदीप पर (उद्योत टीका) लिखी गई।
- प्रदीपोद्योत पर **छाया** नामक व्याख्या **वैद्यनाथ पायगुण्ड** ने लिखी।
- **व्याडिमुनि** ने एक लक्ष श्लोकात्मक **"सङ्ग्रह"** नामक ग्रन्थ लिखा था।
- **खिल पाठ-** अष्टाध्यायी के धातुपाठ, गणपाठ, उणादिपाठ, लिङ्गानुशासन ये खिल पाठ कहलाते हैं।
- **व्याकरणम्-** "व्यक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति शब्दज्ञानजनकं व्याकरणम् तच्च सूत्रम्" ।

## ॥वाक्यपदीयम् ॥

वाक्यपदीय, संस्कृत व्याकरण का एक प्रसिद्ध ग्रंथ है। इसे **त्रिकाण्डी** भी कहते हैं। वाक्यपदीय, व्याकरण शृंखला का मुख्य दार्शनिक ग्रन्थ है। इसके रचयिता नीतिशतक के रचयिता महावैयाकरण तथा योगिराज **भर्तृहरि** हैं। इनके गुरु का नाम **वसुरात** था। भर्तृहरि को किसी ने तीसरी, किसी ने चौथी तथा छठी या सातवी सदी में रखा है। वाक्यपदीय में भर्तृहरि ने भाषा (वाच्) की प्रकृति और उसका वाह्य जगत से सम्बन्ध पर अपने विचार व्यक्त किये हैं। यह ग्रंथ तीन भागों में विभक्त है जिन्हें **"कांड"** कहते हैं। यह समस्त ग्रंथ पद्य में लिखा गया है। **प्रथम "ब्रह्मकांड"** है जिसमें 157 **कारिकाएँ** हैं, दूसरा **"वाक्यकांड है** जिसमें 493 **कारिकाएँ** हैं और **तीसरा "पदकांड"** के नाम से प्रसिद्ध है।

इसका प्रथम काण्ड ब्रह्मकाण्ड है जिसमें शब्द की प्रकृति की व्याख्या की गयी है। इसमें शब्द को ब्रह्म माना गया है और ब्रह्म की प्राप्ति के लिये शब्द को प्रमुख साधन बताया गया है।दूसरे काण्ड में वाक्य के विषय में भर्तृहरि ने विभिन्न मत रखे हैं। तीसरे काण्ड में अन्य दार्शनिक रीतियों के विषयों, जैसे जाति, द्रव्य, काल आदि की चर्चा की गयी है। इसमें भर्तृहरि यह दिखाने का प्रयास करते हैं कि विविध मत, एक ही वस्तु के अलग अलग आयामों को प्रकाशित करते हैं। इस प्रकार वे सभी दर्शनों को अपने व्याकरण आधारित दर्शन द्वारा एकीकरण करने का प्रयास कर रहे हैं।

**प्रथम काण्ड- (ब्रह्मकाण्ड)**

मूल में व्याकरण शास्त्र एक प्रकार से आगम शास्त्र है। इसकी अभिव्यक्ति महेश्वर से है। आगम के अनुसार शब्द के चार स्वरूप हैं **"परा", "पश्यंती", "मध्यमा" तथा "वैखरी"**। इनमें "परा" ही ब्रह्म है। इसीलिए वाक्यपदीय की प्रथम कारिका में ही शब्दतत्व को अनादि और अनंत तथा अक्षर ब्रह्म कहा है। इसी परारूप ब्रह्म से संसार के पदार्थों की उत्पत्ति तथा व्यवहार **विवर्तरूप** में माना गया है। प्रथम कांड में, शब्दतत्व के दार्शनिक रूप का विचार है, अतएव इसे **"ब्रह्मकांड"** नाम दिया गया है और साधारण रूप में इसका वाचकत्व सिद्ध किया गया है। वस्तुतः यह **आगमिक कांड** है। आगम की दृष्टि से लिखा गया है।

उस ब्रह्म की प्राप्ति के उपाय तथा स्वरूप को महर्षियों ने "वेद" कहा है। यह एक होता हुआ भी अनेक मालूम होता है। इसीलिए ऋक् यजुष्, साम तथा अथर्वन् नाम से चार वेद कहे जाते हैं। **ऋग्वेद की 21, यजुर्वेद की 100, सामवेद की 1000 तथा अथर्ववेद की 9 मिलाकर 1130 शाखाएँ वेद** की हुई। ऐसा होने पर भी सभी वेदों तथा उनकी शाखाओं का एकमात्र प्रतिपाद्य विषय **"कर्म"** है। यह स्मरण रखना है कि जो शब्द या मंत्र जिस स्वर में जिस शाखा में पढ़ा गया है वह शब्द उसी तरह उच्चारण किए जाने पर फल देनेवाला होता है। वही शब्द उसी रूप में दूसरी शाखा में पढ़े जाने से इस शब्दोच्चारण का फल होगा अन्यथा नहीं, अथवा अन्य कोई फल देगा।

आगम के बिना कर्तव्य एवं अकर्तव्य का निश्चय नहीं हो सकता। ऋषियों में जो अतींद्रिय वस्तु को देखने का ज्ञान है वह भी आगम ही के द्वारा प्राप्त है (वाक्य. 1.37)। तर्क के द्वारा कोई यथार्थ ज्ञान नहीं प्राप्त हो सकता, वह परिवर्तनशील है। ऊँचे स्तर के ऋषियों के लिए भूत और भविष्य सभी प्रत्यक्ष हैं। ज्ञान के स्वप्रकाश होने के कारण उसमें आत्मा का स्वरूप तथा घट आदि ज्ञेय पदार्थ का स्वरूप दोनों भासित होते हैं। उसी प्रकार शब्द में अर्थ का स्वरूप और उसका अपना स्वरूप, दोनों की प्रतीति होती है।

जिस प्रकार जयापुष्प के लाल रूप से संबद्ध ही स्फटिक का ग्रहण होता है उसी प्रकार स्फोट से मिली हुई ध्वनि का ही ग्रहण होता है। किसी का मत है कि जिस प्रकार इंद्रियों का गुण असंवेद्य होकर भी विषयों के ज्ञान का कारण है, उसी प्रकार ध्वनि असंवेद्य होती हुई भी शब्द के ज्ञान का कारण होती है। दूसरा मत है कि "दूरत्व" दोष के कारण स्फोट के स्वरूप का ज्ञान नहीं होता, केवल ध्वनि का ही भान होता है। तीसरा मत है कि स्फोट का भान तो होता है परंतु दूरत्व दोष के कारण अस्फुट रहता है, जैसे दूर होने के कारण किसी वस्तु का "परिमाण" स्पष्ट रूप में भासित नहीं होता। अणुओं में सभी प्रकार की शक्तियाँ हैं, इसीलिए भेद और संसर्ग (वियोग तथा संयोग) रूप में अणुओं से (संसार के सभी) कार्य होते हैं। ये अणु छाया, आतप, तमस् तथा शब्द के रूप में परिणत होते रहते हैं। ये शक्तियाँ अभिव्यक्त होने के समय में बड़े प्रयत्न से प्रेरित की जाती हैं। और जिस प्रकार (जल के परमाणुओं के क्रमशः इकट्ठे होने से) बादल बनते हैं उसी प्रकार शब्द के परमाणु क्रमशः इकट्ठे होकर सभी कार्य करते हैं। इन परमाणुओं का नाम "शब्द" या "शब्दपरमाणु" है। इस प्रकार शब्द के आगमिक स्वरूप का विवेचन तथा शब्द ही से समस्त जगत् की सृष्टि का निरूपण ब्रह्मकांड में है।

**द्वितीय काण्ड-**

द्वितीय कांड में "पद" वाचक है या "वाक्य" इसका विशद विचार है। भिन्नभिन्न मतों का आलोचन है। इसी कांड में भर्तृहरि ने कहा है शब्द और अर्थ एक ही परमतत्व के दो भेद हैं जो पृथक् नहीं रहते (2.31)। ऋषियों को तत्व का प्रत्यक्ष ज्ञान होता है किंतु उससे व्यवहार नहीं चल सकता। इसलिए व्यवहार के समय उन अनिर्वचनीय तत्वों का जिस प्रकार लोग व्यवहार करते हों उसी तरह सभी को करना चाहिए (2.143)। **"प्रतिभा"** को सभी प्रामाणिक मानते हैं और इसी के बल से पक्षियों के भी व्यवहार का ज्ञान लोगों को होता है (2। 149)। बीज बोने के साथ साथ **"लाह"** का रस आदि पदार्थ के मिला देने से उस बीज के फलों के रंग में तथा उसके फलों में भेद हो जाता है। "शास्त्रार्थ" की प्रक्रिया केवल अज्ञ लोगों को समझाने के लिए है, न कि तत्व के प्रतिपादन के लिए। शास्त्रों में प्रक्रियाओं के द्वारा अविद्या का ही विचार है। "अविद्या" के उपमर्दन के पश्चात् आगम के विकल्पों से रहित शास्त्रप्रक्रिया प्रपंचशून्य होने पर "विद्या" के रूप में प्रकट होती है। इसीलिए कहा है कि असत्य के मार्ग के द्वारा ही सत्य की प्राप्ति होती है, जैसे बालकों को पढ़ाते समय उन्हें पहले शास्त्रों का प्रतिपादन केवल प्रतारणमात्र होता है। इत्यादि दार्शनिक रूप से व्याकरण के तत्वों का विचार 493 कारिकाओं में दूसरे कांड में है।

**तृतीय काण्ड-**

तीसरे कांड में "पदविचार" का प्रक्रम किया गया है। अर्थ द्वारा पदों की परीक्षा होती है। न्यायवैशेषिक के मत में आकाश में सामान्य (जाति) नहीं है किंतु वाक्यपदीय के अनुसार मुख्य या औपाधिक देश भेद के कारण आकाश में भी जाति है । "ज्ञान" स्वप्रकाश है, विषयज्ञान तथा उसका परामर्शज्ञान, ये दोनों भिन्न हैं। इस कांड में 13 खंड हैं जिनमें 450 से अधिक कारिकाओं में दार्शनिक रूप से व्याकरण के पदार्थों का विशद विचार किया गया है। यह कांड खंडित ही है।

**वाक्यपदीयम् प्रमुख विवरण-**

**रचनाकार-** भर्तृहरि, **काण्ड-** 3,

(1) ब्रह्मकाण्ड (आगम कांड) (156)

(2) वाक्यकाण्ड (493)

(3) पदकाण्ड/प्रकीर्णकाण्ड। (450)

## ॥अथ ब्रह्मकाण्डम् ॥

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥1.1 ॥
एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात् ।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते ॥1.2 ॥
अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षड्भावभेदस्य योनयः ॥1.3 ॥
एकस्य सर्वबीजस्य यस्य चेयमनेकधा ।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः ॥1.4 ॥

प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः ।
एकोऽप्यनेकवर्त्मेव समाम्नातः पृथक्पृथक् ॥1.5 ॥
भेदानां बहुमार्गत्वं कर्मण्येकत्र चाङ्गता ।
शब्दानां यतशक्तित्वं तस्य शाखासु दृश्यते ॥1.6 ॥
स्मृतयो बहुरूपाश्च दृष्टादृष्टप्रयोजनाः ।
तमेवाश्रित्य लिङ्गेभ्यो वेदविद्भिः प्रकल्पिताः ॥1.7 ॥
तस्यार्थवादरूपाणि निश्रित्य स्वविकल्पजाः ।
एकत्विनां द्वैतिनां च प्रवादा बहुधा मताः ॥1.8 ॥
सत्या विसुद्धिस्तत्रोक्ता विद्यैवेकपदागमा ।
युक्ता प्रणवरूपेण सर्ववादाविरोधिना ॥1.9 ॥
विधातुस्तस्य लोकानां अङ्गोपाङ्गनिबन्धनाः ।
विद्याभेदाः प्रतायन्ते ज्ञानसंस्कारहेतवः ॥1.10 ॥
आसन्नं ब्रह्मणस्तस्य तपसां उत्तमं तपः ।
प्रथमं छन्दसां अङ्गं प्राहुर्व्याकरणं बुधाः ॥1.11 ॥
प्राप्तरूपविभागाया यो वाचः परमो रसः ।
यत्तत्पुण्यतमं ज्योतिस्तस्य मार्गोऽयमाञ्जसः ॥1.12 ॥
अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।
तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ॥1.13 ॥
तद्द्वारं अपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्वविद्यानां अधिविद्यं प्रकासते ॥1.14 ॥
यथार्थजातयः सर्वाः सशब्दाकृतिनिबन्धनाः ।
तथैव लोके विद्यानां एसा विद्या परायनम् ॥1.15 ॥
इदं आद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानां अजिह्मा राजपद्धतिः ॥1.16 ॥
अत्रातीतविपर्यासः केवलां अनुपस्यति ।
छन्दस्यस्छन्दसां योनिं आत्मा छन्दोमयीं तनुम् ॥1.17 ॥
प्रत्यस्थमितभेदाया यद्वाचो रूपं उत्तमम् ।
यदस्मिन्नेव तमसि ज्योतिः शुद्धं विवर्तते ॥1.18 ॥
वैकृतं समति क्रान्ता मूर्तिव्यापारदर्शनम् ।
व्यतीत्यालोकतमसी प्रकाशं यं उपासते ॥1.19 ॥
यत्र वाचो निमेत्तानि चिह्नानीवाक्षरस्मृतेः ।
शब्दपूर्वेण योगेन भासन्ते प्रतिबिम्बवत् ॥1.20 ॥
अथर्वणां अङ्गिरसां सांनां ऋग्यजुषस्य च ।
यस्मिन्नुच्चावचा वर्णाः पृथक्स्थितपरिग्रहाः ॥1.21 ॥
यदेकं प्रक्रियाभेदैर्बहुधा प्रविभज्यते ।
तद्व्याकरणं आगम्य परं ब्रह्माधिगम्यते ॥1.22 ॥
नित्याः शब्दार्थसंबन्धास्तत्राम्नाता महर्षिभिः ।
सूत्राणां सानुतन्त्राणां भाष्याणां च प्रणेतृभिः ॥1.23 ॥
अपोद्धारपदार्थाः ये ये चार्थाः स्थितलक्षणाः ।
अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः ॥1.24 ॥
कार्यकारणभावेन योग्यभावेन च स्थिताः ।
धर्मे ये प्रत्यये चाङ्गं संबन्धाः साध्वसाधुषु ॥1.25 ॥
ते लिङ्गैश्च स्वशब्दैश्च शास्त्रेऽस्मिन्नुपवर्णिताः ।
स्मृत्यर्थं अनुगम्यन्ते के चिदेव यथागमम् ॥1.26 ॥
शिष्टेभ्य आगमात्सिद्धाः साधवो धर्मसाधनम् ।
अर्थप्रत्यायनाभेदे विपरीतास्त्वसाधवः ॥1.27 ॥
नित्यत्वे कृतकत्वे वा तेषां आदिर्न विद्यते ।
प्राणिनां इव सा चैषा व्यवस्थानित्यतोच्यते ॥1.28 ॥
नानर्थिकां इमां कश्चिद्व्यवस्थां कर्तुं अर्हति ।
तस्मान्निबध्यते शिष्टैः साधुत्वविषया स्मृतिः ॥1.29 ॥
न चागमादृते धर्मस्तर्केण व्यवतिष्ठते ।
ऋषीणां अपि यज्ज्ञानं तदप्यागमपूर्वकम् ॥1.30 ॥
धर्मस्य चाव्यवच्छिन्नाः पन्थानो ये व्यवस्थिताः ।
न तांल्लोकप्रसिद्धत्वात्कश्चित्तर्केण बाधते ॥1.31 ॥
अवस्थादेशकालानां भेदाद्भिन्नासु शक्तिषु ।
भावानां अनुमानेन प्रसिद्धिरतिदुर्लभा ॥1.32 ॥
निर्ज्ञातशक्तेर्द्रव्यस्य तां तानर्थक्रियां प्रति ।
विशिष्टद्रव्यसंबन्धे सा शक्तिः प्रतिबध्यते ॥1.33 ॥
यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥1.34 ॥
परेषां असमाख्येयं अभ्यासादेव जायते ।
मणिरूप्यादिविज्ञानं तद्विदां नानुमानिकम् ॥1.35 ॥
प्रत्यक्षं अनुमानं च व्यतिक्रम्य व्यवस्थिताः ।
पितृरक्षःपिशाचानां कर्मजा एव सिद्धयः ॥1.36 ॥
आविर्भूतप्रकाशानां अनुपप्लुतचेतसाम् ।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥1.37 ॥
अतीन्द्रियानसंवेद्यान्पश्यन्त्यार्षेण चक्षुषा ।
ये भावान्वचनं तेषां नानुमानेन बाध्यते ॥1.38 ॥
यो यस्य स्वं इव ज्ञानं दर्शनं नातिशङ्कते ।
स्थितं प्रत्यक्षपक्षे तं कथं अन्यो निवर्तयेत् ॥1.39 ॥
चैतन्यं इव यश्चायं अविच्छेदेन वर्तते ।
आगमस्तं उपासीनो हेतुवादैर्न बाध्यते ॥1.40 ॥
हस्तस्पर्शादिवान्धेन विषमे पथि धावता ।
अनुमानप्रधानेन विनिपातो न दुर्लभः ॥1.41 ॥
तस्मादकृतकं शास्त्रं स्मृतिं च सनिबन्धनाम् ।
आश्रित्यारभ्यते शिष्टैः साधुत्वविषया स्मृतिः ॥1.42 ॥
द्वावुपादानशब्देषु शब्दो शब्दविदो विदुः ।
एको निमित्तं शब्दानां अपरोऽर्थे प्रयुज्यते ॥1.43 ॥
आत्मभेदं तयोः केचिदस्तीत्याहुः पुराणगाः ।
बुद्धिभेदादभिन्नस्य भेदं एके प्रचक्षते ॥1.44 ॥
अरणिस्थं यथा ज्योतिः प्रकाशान्तरकारणम् ।
तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक् ॥1.45 ॥
वितर्कितः पुरा बुद्ध्या क्वचिदर्थे निवेशितः ।
करणेभ्यो विवृत्तेन ध्वनिना सोऽनुगृह्यते ॥1.46 ॥
नादस्य क्रमजातत्वान्न पूर्वो न परश्च सः ।
अक्रमः क्रमरूपेण भेदवानिव जायते ॥1.47 ॥
प्रतिबिम्बं यथान्यत्र स्थितं तोयक्रियावशात् ।
तत्प्रवृत्तिं इवान्वेति स धर्मः स्फोटनादयोः ॥1.48 ॥
आत्मरूपं यथा ज्ञाने ज्ञेयरूपं च दृश्यते ।
अर्थरूपं तथा शब्दे स्वरूपं च प्रकाशते ॥1.49 ॥
आण्डभावं इवापन्नो यः क्रतुः शब्दसंज्ञकः ।
वृत्तिस्तस्य क्रियारूपा भागशो लभते क्रमम् ॥1.50 ॥

यथैकबुद्धिविषया मूर्तिराक्रियते पटे ।
मूर्त्यन्तरस्य त्रितयं एवं शब्देऽपि दृश्यते ॥1.51 ॥
यथा प्रयोक्तुः प्राग्बुद्धिः शब्देष्वेव प्रवर्तते ।
व्यवसायो ग्रहीतृणां एवं तेष्वेव जायते ॥1.52 ॥
अर्थोपसर्जनीभूतानभिधेयेषु केषुचित् ।
चरितार्थान्परार्थत्वान्न लोकः प्रतिपद्यते ॥1.53 ॥
ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दानां एते पृथगवस्थिते ॥1.54 ॥
विषयत्वं अनापन्नैः शब्दैर्नार्थः प्रकाश्यते ।
न सत्तयैव तेऽर्थानां अगृहीताः प्रकाशकाः ॥1.55 ॥
अतोऽनिर्ज्ञातरूपत्वात्किं आहेत्यभिधीयते ।
नेन्द्रियाणां प्रकाश्येऽर्थे स्वरूपं गृह्यते तथा ॥1.56 ॥
भेदेनावगृहीतौ द्वौ शब्दधर्मावपोद्धृतौ ।
भेदकारेषु हेतुत्वं अविरोधेन गच्छतः ॥1.57 ॥
वृद्ध्यादयो यथा शब्दाः स्वरूपोपनिबन्धनाः ।
आदैच्प्रत्यायितैः शब्दैः संबन्धं यान्ति संज्ञिभिः ॥1.58 ॥
अग्निशब्दस्तथैवायं अग्निशब्दनिबन्धनः ।
अग्निश्रुत्यैति संबन्धं अग्निशब्दाभिधेयया ॥1.59 ॥
यो य उच्चार्यते शब्दो नियतं न स कार्यभाक् ।
अन्यप्रत्यायने शक्तिर्न तस्य प्रतिबध्यते ॥1.60 ॥
उच्चरन्परतन्त्रत्वाद्गुणः कार्यैर्न युज्यते ।
तस्मात्तदर्थैः कार्याणां संबन्धः परिकल्प्यते ॥1.61 ॥
सामान्यं आश्रितं यद्यदुपमानोपमेययोः ।
तस्य तस्योपमानेषु धर्मोऽन्यो व्यतिरिच्यते ॥1.62 ॥
गुणः प्रकर्षहेतुर्यः स्वातन्त्र्येणोपदिश्यते ।
तस्याश्रितादुणादेव प्रकृष्टत्वं प्रतीयते ॥1.63 ॥
तस्याभिधेयभावेन यः शब्दः समवस्थितः ।
तसाप्युच्चारणे रूपं अन्यत्तस्माद्विविच्यते ॥1.64 ॥
प्राक्सञ्ज्ञिनाभिसंबन्धात्संज्ञा रूपपदार्थिका ।
षष्ठ्याश्च प्रथमायाश्च निमित्तत्वाय कल्पते ॥1.65 ॥
तत्रार्थवत्त्वात्प्रथमा संज्ञाशब्दात्प्रतीयते ।
अस्येते व्यतिरेकश्च तदर्थादेव जायते ॥1.66 ॥
स्वं रूपं इति कैश्चित्तु व्यक्तिः संज्ञोपदिश्यते ।
जातेः कार्याणि संसृष्टा जातिस्तु प्रतिपद्यते ॥1.67 ॥
संज्ञिनीं व्यक्तिं इच्छन्ति सूत्रे ग्राह्यां अथापरे ।
जातिप्रत्यायिता व्यक्तिः प्रदेशेषूपतिष्ठते ॥1.68 ॥
कार्यत्वे नित्यतायां वा के चिदेकत्ववादिनः ।
कार्यत्वे नित्यतायां वा के चिन्नानात्ववादिनः ॥1.69 ॥
पदभेदेऽपि वर्णानां एकत्वं न निवर्तते ।
वाक्येषु पदं एकं च भिन्नेष्वप्युपलभ्यते ॥1.70 ॥
न वर्णव्यतिरेकेण पदं अन्यच्च विद्यते ।
वाक्यं वर्णपदाभ्यां च प्रविभागो न कश्चन ॥1.71 ॥
पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात्पदानां अत्यन्तं प्रविभागो न कश्चन ॥1.72 ॥
भिन्नदर्शनं आश्रित्य व्यवहारोऽनुगम्यते ।
तत्र यन्मुख्यं एकेषां तत्रान्येषां विपर्ययः ॥1.73 ॥

स्फोतस्याभिन्नकालस्य ध्वनिकालानुपातिनः ।
ग्रहणोपाधिभेदेन वृत्तिभेदं प्रचक्षते ॥1.74 ॥
स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु ।
प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते ॥1.75 ॥
शब्दस्योर्ध्वं अभिव्यक्तेर्वृत्तिभेदं तु वैकृतः ।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥1.76 ॥
इन्द्रियस्यैवसंस्कारः शब्दस्यैवोभवस्य वा ।
क्रियते ध्वनिभिर्वादास्त्रयोऽभिव्यक्तिवादिनाम् ॥1.77 ॥
इन्द्रियस्यैव संस्कारः समाधानाञ्जनादिभिः ।
विषयस्य तु संस्कारः तद्गन्धप्रतिपत्तये ॥1.78 ॥
चक्षुषः प्राप्यकारित्वे तेजसा तु द्वयोरपि ।
विषयेन्द्रिययोरिष्टा संस्कारः स क्रमो ध्वनेः ॥1.79 ॥
स्फोटरूपाविभागेन ध्वनेर्ग्रहणं इष्यते ।
कैश्चित्ध्वनिरसंवेद्यः स्वतन्त्रोऽन्यैः प्रकल्पितः ॥1.80 ॥
यथानुवाकः श्लोको वा सोढत्वं उपगच्छते ।
आवृत्त्या न तु स ग्रन्थः प्रत्यावृत्ति निरूप्यते ॥1.81 ॥
प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा ।
ध्वनिप्रकाशिते शब्दे स्वरूपं अवधार्यते ॥1.82 ॥
नादैराहितबीजायां अन्त्येन ध्वनिना सह ।
आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥1.83 ॥
असतश्चान्तराले याञ् छब्दानस्तीति मन्यते ।
प्रतिपत्तुरशक्तिः सा ग्रहणोपाय एव सः ॥1.84 ॥
भेदानुकारो ज्ञानस्य वाचश्चोपप्लवो ध्रुवः ।
क्रमोपसृष्टरूपा वाग्ज्ञानं ज्ञेयव्यपाश्रयम् ॥1.85 ॥
यथाद्यसंख्याग्रहणं उपायः प्रतिपत्तये ।
संख्यान्तराणां भेदेऽपि तथा शब्दान्तरश्रुतिः ॥1.86 ॥
प्रत्येकं व्यञ्जका भिन्न वर्णवाक्यपदेषु ये ।
तेषां अत्यन्तभेदेऽपि संकीर्णा इव शक्तयः ॥1.87 ॥
यथैव दर्शनैः पूर्वैर्दूरात्संतमसेऽपि वा ।
अन्यथाकृत्य विषयं अन्यथैवाध्यवस्यति ॥1.88 ॥
व्यज्यमाने तथा वाक्ये वाक्याभिव्यक्तिहेतुभिः ।
भागावग्रहरूपेण पूर्वं बुद्धिः प्रवर्तते ॥1.89 ॥
यथानुपूर्वीनियमो विकारे क्षीरबीजयोः ।
तथैव प्रतिपत्तृणां नियतो बुद्धिषु क्रमः ॥1.90 ॥
भागवत्स्वपि तेष्वेव रूपभेदो ध्वनेः क्रमात् ।
निर्भागेष्वभ्युपायो वा भागभेदप्रकल्पनम् ॥1.91 ॥
अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता ।
कैश्चिद्व्यक्तय एवास्य ध्वनित्वेन प्रकल्पिताः ॥1.92 ॥
अविकारस्य शब्दस्य निमित्तैर्विकृतो ध्वनिः ।
उपलब्धौ निमित्तत्वं उपयाति प्रकाशवत् ॥1.93 ॥
न चानित्येष्वभिव्यक्तिर्नियमेन व्यवस्थिता ।
आश्रयैरपि नित्यानां जातीनां व्यक्तिरिष्यते ॥1.94 ॥
देशादिभिश्च संबन्धो दृष्टः कायवतां अपि ।
देशभेदविकल्पेऽपि न भेदो ध्वनिशब्दयोः ॥1.95 ॥
ग्रहणग्राह्ययोः सिद्धा योग्यता नियता यथा ।
व्यङ्ग्यव्यञ्जकभावेऽपि तथैव स्फोटनादयोः ॥1.96 ॥

- **अष्टम सर्ग-** अज विलाप, 'तृणबिन्दु' नामक ऋषि के शाप से हिरणी नाम की अप्सरा इन्दुमती थी, अब वह शापमुक्त हो गई है। अज वनगमन।
- **नवम सर्ग-** श्रवणकुमार की ''मृत्यु तथा शापवर्णन।
- **दशम सर्ग-** ''ऋष्यश्रृंग'' की अध्यक्षता में पुत्रेष्टि यज्ञ, चारों पुत्रों का जन्म।
- **एकादश सर्ग-**ताड़का वध, सुबाहु वध, मारीचि को फेंकना, जनकपुरी प्रस्थान, अहल्या मुक्ति, धनुष यज्ञ, राम-सीता विवाह।
- **द्वादश सर्ग-** कैकयी के वर, राम वन गमन, दशरथ मृत्यु।
- **त्रयोदश सर्ग-** राम का अयोध्या आना।
- **चतुर्दश सर्ग-** राम राज्य अभिषेक, सीता परित्याग, अश्वमेध यज्ञ।
- **पंचदश सर्ग-** शत्रुघ्न द्वारा रावण की बहन 'कुम्भीनसी' के पुत्र 'लवणासुर' का वध सीता का भूगर्भ में जाना, भरत को 'सिन्धु' देश का राज्य, भरत के पुत्र 'तक्ष' को 'तक्ष', 'पुष्कल' को 'पुष्कल' 'लक्ष्मण' के पुत्र 'अंगद' तथा 'चित्रकेतु' को 'कारापल' 'कुश' को-'कुशावती' 'लव' को 'शरावती' का राजा बनाना।
- **षोडश सर्ग-** अगस्त्य ऋषि द्वारा राम को दिये जैत्र आभूषण का नदी में गिरना। कुश का कुमुद की बहन कुमुद्वती से विवाह।
- **सप्तदश सर्ग-** अतिथि अज-पुत्र का जन्म।
- **अष्टादश सर्ग-** अतिथि की पत्नी निषधराज कुमारी से निषध का जन्म।
- **नवदश सर्ग-** 'सुदर्शन' के पुत्र 'अग्निवर्ण' का राज्याभिषेक।

### प्रथम सर्ग सूक्तियाँ-

- वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
  जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥1.1॥
- क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
  तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥1.2॥
- मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम् ।
  प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥1.3॥
- अथवा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः ।
  मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः । ।1.4 ।।
- शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
  वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥1.8॥
- तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
  हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥1.10॥
- आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः ।
  आगमैः सदृशारम्भ आरम्भसदृशोदयः ॥1.15॥
- प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।
  सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥1.18॥
- तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।
  फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥1.20॥
- ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।
  गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥1.22॥
- प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।
  स पिता पितरस्तासां केवलं जन्महेतवः ॥1.24॥
- दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदम् – (**दिलीप** 60)
- हविरावर्जितं होतस्त्वया विधिवदग्निषु।
  वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम्॥ (**दिलीप** 62)
- पयः पूर्वैः स्वनिःश्वासैः कवोष्णमुपभुज्यते।– (**दिलीप** 67)
- लोकान्तरसुखं पुण्यं तपोदानसमुद्भवं ।
  संततिः शुद्धवंश्या हि परत्रेह च शर्मणे । । 1.69 । ।
- अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः। (**दिलीप**-71)
- इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः॥ (**दिलीप**-72)
- प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः। (**वसिष्ठ** 79)
- श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ।
- आराध्यय सपत्नीकः प्रीताकामदुधा हि सा- (**नन्दिनी** 1/89)
- स शापो न त्वया राजन्न च सारथिना श्रुतः ।
  नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥1.78॥
- हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः ।
  भुजंगपिहितद्वारं पातालमधितिष्ठति ॥1.80॥
- अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः ।
  उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ॥1.87॥

### प्रथम सर्ग के प्रमुख शब्दार्थ-

- षड्जसंवादिनी केका द्विधा भिन्ना शिखण्डिभिः॥
  **केका**- मयूरवाणी, **शिखण्डिभिः**- मयूरैः।
  **सुरभिः**- कामधेनु, **हैयङ्गवीनं** - ह्योगोदोहोद्भवं घृतं,
  **यान्तार**- सारथि, **स्रष्टुः**- ब्रह्मा।

## 3. किरातार्जुनीयम्

### परिचय-

**किरातार्जुनीयम्** महाकवि **भारवि** द्वारा छठी शताब्दी ई. में रचित महाकाव्य है जिसे संस्कृत साहित्य में महाकाव्यों तथा **'बृहत्त्रयी'** में स्थान प्राप्त है। महाभारत में वर्णित किरातवेशी शिव के साथ अर्जुन के युद्ध की लघुकथा को आधार बनाकर कवि ने राजनीति, धर्मनीति, कूटनीति, समाजनीति, युद्धनीति, जनजीवन आदि का **मनोरम** वर्णन किया है। यह काव्य विभिन्न रसों से ओतप्रोत रचना है किन्तु **वीर रस** प्रधान है। संस्कृत के छः प्रसिद्ध महाकाव्य हैं – इनमें से **बृहत्त्रयी में**- किरातार्जुनीयम् (भारवि), शिशुपालवधम् (माघ) और नैषधीयचरितम् (श्रीहर्ष) आते हैं तथा **लघुत्रयी**

में- कुमारसम्भवम्, रघुवंशम् और मेघदूतम् (तीनों कालिदास द्वारा रचित) महाकाव्य आते हैं।

किरातार्जुनीयम् भारवि की एकमात्र उपलब्ध कृति है, जिसने एक सांगोपांग महाकाव्य का मार्ग प्रशस्त किया। माघ-जैसे कवियों ने उसी का अनुगमन करते हुए संस्कृत साहित्य भण्डार को इस विधा से समृद्ध किया और इसे नई ऊँचाई प्रदान की । कालिदास की लघुत्रयी और अश्वघोष के बुद्धचरितम् में महाकाव्य की जिस धारा का दर्शन होता है, अपने विशिष्ट गुणों के होते हुए भी उसमें वह विशदता और समग्रता नहीं है, जिसका सूत्रपात भारवि ने किया। संस्कृत में किरातार्जुनीयम् की कम से कम 37 टीकाएँ हुई हैं, जिनमें मल्लिनाथ की टीका घंटापथ सर्वश्रेष्ठ है। सन 1912 में कार्ल कैप्लर ने हारवर्ड ओरियेंटल सीरीज के अंतर्गत किरातार्जुनीयम् का जर्मन भाषा में अनुवाद किया। अंग्रेजी में भी इसके भिन्न-भिन्न भागों के छः से अधिक अनुवाद हो चुके हैं ।

## ॥प्रथमः सर्गः ॥

श्रियः कुरूणामधिपस्य पालनीं,
प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
स वर्णिलिङ्गी विदितः समाययौ,
युधिष्ठिरं द्वैतवने वनेचरः ॥1.1 ॥
कृतप्रणामस्य महीं महीभुजे,
जितां सपत्नेन निवेदयिष्यतः ।
न विव्यथे तस्य मनो न हि प्रियं,
प्रवक्तुमिच्छन्ति मृषा हितैषिणः ॥1.2 ॥
द्विषां विघाताय विधातुमिच्छतो,
रहस्यनुज्ञामधिगम्य भूभृतः ।
स सौष्ठवौदार्यविशेषशालिनीं,
विनिश्चितार्थामिति वाचमाददे ॥1.3 ॥
क्रियासु युक्तैर्नृप चारचक्षुषो,
न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा,
हितं मनोहारि च दुर्लभं वचः ॥1.4 ॥
स किंसखा साधु न शास्ति योऽधिपं,
हितान्न यः संशृणुते स किंप्रभुः ।
सदानुकूलेषु हि कुर्वते रतिं,
नृपेष्वमात्येषु च सर्वसम्पदः ॥1.5 ॥
निसर्गदुर्बोधमबोधविक्लवाः,
क्व भूपतीनां चरितं क्व जन्तवः ।
तवानुभावोऽयमवेदि यन्मया,
निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥1.6 ॥
विशङ्कमानो भवतः पराभवं,
नृपासनस्थोऽपि वनाधिवासिनः ।
दुरोदरच्छद्मजितां समीहते,
नयेन जेतुं जगतीं सुयोधनः ॥1.7 ॥
तथापि जिह्मः स भवज्जिगीषया,
तनोति शुभ्रं गुणसम्पदा यशः ।
समुन्नयन्भूतिमनार्यसंगमाद्वरं,
विरोधोऽपि समं महात्मभिः ॥1.8 ॥
कृतारिषड्वर्गजयेन मानवीम्,
अगम्यरूपां पदवीं प्रपित्सुना ।
विभज्य नक्तंदिवमस्ततन्द्रिणा,
वितन्यते तेन नयेन पौरुषम् ॥1.9 ॥
सखीनिव प्रीतियुजोऽनुजीविनः,
समानमानान्सुहृदश्च बन्धुभिः ।
स सन्ततं दर्शयते गतस्मयः,
कृताधिपत्यामिव साधु बन्धुताम् ॥1.10 ॥
असक्तमाराधयतो यथायथं,
विभज्य भक्त्या समपक्षपातया ।
गुणानुरागादिव सख्यमीयिवान्,
न बाधतेऽस्य त्रिगुणः परस्परम् ॥1.11 ॥
निरत्ययं साम न दानवर्जितं,
न भूरि दानं विरहय्य सत्क्रियां ।
प्रवर्तते तस्य विशेषशालिनीं,
गुणानुरोधेन विना न सत्क्रिया ॥1.12 ॥
वसूनि वाञ्छन्न वशी न मन्युना,
स्वधर्म इत्येव निवृत्तकारणः ।
गुरूपदिष्टेन रिपौ सुतेऽपि वा,
निहन्ति दण्डेन स धर्मविप्लवं ॥1.13 ॥
विधाय रक्षान्परितः परेतरान्,
अशङ्किताकारमुपैति शङ्कितः ।
क्रियापवर्गेष्वनुजीविसात्कृताः,
कृतज्ञतामस्य वदन्ति सम्पदः ॥1.14 ॥
अनारतं तेन पदेषु लम्भिता,
विभज्य सम्यग्विनियोगसत्क्रियाः ।
फलन्त्युपायाः परिबृंहितायती,
रुपेत्य संघर्षमिवार्थसम्पदः ॥1.15 ॥
अनेकराजन्यरथाश्वसंकुलं,
तदीयमास्थाननिकेतनाजिरं ।
नयत्ययुग्मच्छदगन्धिरार्द्रतां,
भृशं नृपोपायनदन्तिनां मदः ॥1.16 ॥
सुखेन लभ्या दधतः कृषीवलैः,
अकृष्टपच्या इव सस्यसम्पदः ।
वितन्वति क्षेममदेवमातृकाः

चिराय तस्मिन्कुरवश्चकासते ॥1.17॥
उदारकीर्तेरुदयं दयावतः,
प्रशान्तबाधं दिशतोऽभिरक्षया ।
स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता,
वसूपमानस्य वसूनि मेदिनी ॥1.18॥
महौजसो मानधना धनार्चिता,
धनुर्भृतः संयति लब्धकीर्तयः ।
न संहतास्तस्य न भेदवृत्तयः,
प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥1.19॥
महीभुजां सच्चरितैश्चरैः क्रियाः,
स वेद निःशेषमशेषितक्रियः ।
महोदयैस्तस्य हितानुबन्धिभिः,
प्रतीयते धातुरिवेहितं फलैः ॥1.20॥
न तेन सज्यं क्वचिदुद्यतं धनुः,
कृतं न वा कोपविजिह्ममाननम् ।
गुणानुरागेण शिरोभिरुह्यते,
नराधिपैर्माल्यमिवास्य शासनम् ॥1.21॥
स यौवराज्ये नवयौवनोद्धतं,
निधाय दुःशासनमिद्धशासनः ।
मखेष्वखिन्नोऽनुमतः पुरोधसा,
धिनोति हव्येन हिरण्यरेतसम् ॥1.22॥
प्रलीनभूपालमपि स्थिरायति,
प्रशासदावारिधि मण्डलं भुवः ।
स चिन्तयत्येव भियस्त्वदेष्यतीः,
अहो दुरन्ता बलवद्विरोधिता ॥1.23॥
कथाप्रसङ्गेन जनैरुदाहृताद्,
अनुस्मृताखण्डलसूनुविक्रमः ।
तवाभिधानाद्व्यथते नताननः,
स दुःसहान्मन्त्रपदादिवोरगः ॥1.24॥
तदाशु कर्तुं त्वयि जिह्ममुद्यते,
विधीयतां तत्र विधेयमुत्तरम् ।
परप्रणीतानि वचांसि चिन्वतां,
प्रवृत्तिसाराः खलु मादृशां गिरः ॥1.25॥
इतीरयित्वा गिरमात्तसत्क्रिये,
गतेऽथ पत्यौ वनसंनिवासिनाम् ।
प्रविश्य कृष्णा सदनं महीभुजा,
तदाचचक्षेऽनुजसन्निधौ वचः ॥1.26॥
निशम्य सिद्धिं द्विषतामपाकृतीः,
ततस्ततस्त्या विनियन्तुमक्षमा ।
नृपस्य मन्युव्यवसायदीपिनी,
रुदाजहार द्रुपदात्मजा गिरः ॥1.27॥
भवादृशेषु प्रमदाजनोदितं,
भवत्यधिक्षेप इवानुशासनम् ।
तथापि वक्तुं व्यवसाययन्ति मां,
निरस्तनारीसमया दुराधयः ॥1.28॥
अखण्डमाखण्डलतुल्यधामभिः,
चिरं धृता भूपतिभिः स्ववंशजैः ।
त्वया स्वहस्तेन मही मदच्युता'
मतङ्गजेन स्रगिवापवर्जिता ॥1.29॥
व्रजन्ति ते मूढधियः पराभवं,
भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधान्,
असंवृताङ्गान्निशिता इवेषवः ॥1.30॥
गुणानुरक्तामनुरक्तसाधनः,
कुलाभिमानी कुलजां नराधिपः ।
परैस्त्वदन्यः क इवापहारयेन्,
मनोरमां आत्मवधूमिव श्रियं ॥1.31॥
भवन्तमेतर्हि मनस्विगर्हिते,
विवर्तमानं नरदेव वर्त्मनि ।
कथं न मन्युर्ज्वलयत्युदीरितः,
शमीतरुं शुष्कं इवाग्निरुच्छिखः ॥1.32॥
अवन्ध्यकोपस्य निहन्तुरापदां,
भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना,
न जातहार्देन न विद्विषादरः ॥1.33॥
परिभ्रमंल्लोहितचन्दनोचितः,
पदातिरन्तर्गिरि रेणुरूषितः ।
महारथः सत्यधनस्य मानसं,
दुनोति नो कच्चिदयं वृकोदरः ॥1.34॥
विजित्य यः प्राज्यं अयच्छदुत्तरान्,
कुरूनकुप्यं वसु वासवोपमः ।
स वल्कवासांसि तवाधुनाहरन्,
करोति मन्युं न कथं धनंजयः ॥1.35॥
वनान्तशय्याकठिनीकृताकृती,
कचाचितौ विष्वगिवागजौ गजौ ।
कथं त्वमेतौ धृतिसंयमौ यमौ,
विलोकयन्नुत्सहसे न बाधितुं ॥1.36॥
इमां अहं वेद न तावकीं धियं,
विचित्ररूपाः खलु चित्तवृत्तयः ।
विचिन्तयन्त्या भवदापदं परां,
रुजन्ति चेतः प्रसभं ममाधयः ॥1.37॥
पुराधिरूढः शयनं महाधनं,
विबोध्यसे यः स्तुतिगीतिमङ्गलैः ।
अदभ्रदर्भां अधिशय्य स स्थलीं,

जहासि निद्रामशिवैः शिवारुतैः ॥1.38 ॥

पुरोपनीतं नृप रामणीयकं,
द्विजातिशेषेण यदेतदन्धसा ।
तदद्य ते वन्यफलाशिनः परं,
परैति कार्श्यं यशसा समं वपुः ॥1.39 ॥

अनारतं यौ मणिपीठशायिना,
वरञ्जयद्राजशिरःस्रजां रजः ।
निषीदतस्तौ चरणौ वनेषु ते,
मृगद्विजालूनशिखेषु बर्हिषां ॥1.40 ॥

द्विषन्निमित्ता यदियं दशा ततः,
समूलमुन्मूलयतीव मे मनः ।
परैरपर्यासितवीर्यसम्पदां,
पराभवोऽप्युत्सव एव मानिनां ॥1.41 ॥

विहाय शान्तिं नृप धाम तत्पुनः,
प्रसीद संधेहि वधाय विद्विषां ।
व्रजन्ति शत्रूनवधूय निःस्पृहाः,
शमेन सिद्धिं मुनयो न भूभृतः ॥1.42 ॥

पुरःसरा धामवतां यशोधनाः,
सुदुःसहं प्राप्य निकारं ईदृशं ।
भवादृशाश्चेदधिकुर्वते रतिम्,
निराश्रया हन्त हता मनस्विता ॥1.43 ॥

अथ क्षमां एव निरस्तविक्रमः,
चिराय पर्येषि सुखस्य साधनं ।
विहाय लक्ष्मीपतिलक्ष्म कार्मुकं,
जटाधरः सञ्जुहुधीह पावकं ॥1.44 ॥

न समयपरिरक्षणं क्षमं ते,
निकृतिपरेषु परेषु भूरिधाम्नः ।
अरिषु हि विजयार्थिनः क्षितीशा,
विदधति सोपधि संधिदूषणानि ॥1.45 ॥

विधिसमयनियोगाद्दीप्तिसंहारजिह्मं,
शिथिलवसुमगाधे मग्नमापत्पयोधौ ।
रिपुतिमिरं उदस्योदीयमानं दिनादौ,
दिनकृतं इव लक्ष्मीस्त्वां समभ्येतु भूयः ॥1.46 ॥

**॥इति भारविकृतौ महाकाव्ये किरातार्जुनीये प्रथमः सर्गः ॥**

## किरातार्जुनीयम् के प्रमुख अंश-

**॥मंगलाचरण॥** (वस्तुनिर्देशात्मक)

**"श्रियः कुरुणामधिपस्य पालनीं,
प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्।
स वर्णलिङ्गी विदितः समाययौ,
युधिष्ठिरं द्वैतवने वनेचरः ॥"**

कुरु नामक देश के राजा (दुर्योधन) की राजलक्ष्मी का पालन करने वाली प्रजा सम्बन्धित नीति (व्यहवार) को जानने के लिए जिस (वनेचर) को नियुक्त किया था, ब्रह्मचारी के वेष को धारण करने वाला वह किरात (दुर्योधन के सम्पूर्ण
वृत्तान्त को) जानकर द्वैत वन में युधिष्ठिर के समीप लौट आया ।

| | | |
|---|---|---|
| **छन्द** | - | वंशस्थ, पुष्पिताग्रा, मालिनी |
| **स्तुति** | - | 'लक्ष्मी' |
| **लेखक** | - | भारवि |
| **सर्ग** | - | 18 |
| **श्लोक** | - | (1030), |
| **उपजीव्य ग्रन्थ** | - | महाभारत का वनपर्व, |
| **नायक** | - | अर्जुन, |
| **प्रतिनायक** | - | किरातवेशधारी 'शिव', |
| **नायक प्रकृति** | - | धीरोदात्त, |
| **नायिका** | - | द्रौपदी, |
| **अंगीरस** | - | वीर, |
| **गौण/अंगी रस** | - | श्रृंगारादि, |
| **गुण** | - | ओज गुण तथा प्रथम सर्ग में 'वैदर्भी |
| **रीति** | - | पांचाली, |

## किरातार्जुनीयम् के प्रमुख पात्र-

श्रीकृष्ण, युधिष्ठिर, भीम, नकुल, सहदेव, वनेचर, दुर्योधन, कर्ण, भीष्म, परशुराम, यक्ष, द्रोण, इन्द्र, व्यास, मूक, शूकर।

## किरातार्जुनीयम् प्रथम सर्ग के मुख्य सन्दर्भ-

- **मुख्य फल-** 'दिव्यास्त्र लाभ'
- **'अदेवमातृकाः'** शब्द का प्रयोग किया गया है- (श्लोक सं.1.17)
- **भारवि का काल-** छठवीं शताब्दी, **भारवि** शैवानुयायी थें।
- **प्रिय छन्द-** वंशस्थ/उपजाति।
- किरातार्जुनीयम् के प्रारम्भ में **'श्री'** शब्द से तथा अन्तिम में **'लक्ष्मी'** शब्द प्रयोग हुआ हैं।
- भारवि के काव्य को कहा जाता है- **लक्ष्मीपदाङ्क।**
- **प्रमाणिका टीका- "घण्टापथ"-** मल्लिनाथ।
- सर्वप्रथम तीन सर्ग- **पाषाणत्रय।**
- **घण्टापथ का शाब्दिक अर्थ- "राजमार्ग"।**
- अन्य टीकाओं में लोकप्रिय टीका- **"शब्दार्थदीपिका- चित्रभानु"** प्रथम तीन सर्ग के ऊपर, **त्रिसागरिका।**
- **किरातार्जुनीयम्** का 15 **वां सर्ग चित्रकाव्य** के लिये प्रसिद्ध है।

- **"कृतारिषड्वर्गजयेन"** यहाँ षड्वर्ग से तात्पर्य है – **काम, क्रोध, लोभ, मोह, मद, मत्सर।**
- **गतस्मयः सः** में सः पद प्रयोग हुआ है – **दुर्योधन** को।
- **नारीसमया** में समया का अर्थ है – **मर्यादा।**
- मनुवादी मार्ग का अनुसरण करता है- **दुर्योधन**
- दुर्योधन के लिए प्रयुक्त अस्ततन्द्रिणा पद का अर्थ है- **आलस्यरहित ।**
- रात और दिन को अच्छी तरह बाँटकर अपने पौरुष को कौन बढ़ा रहा है - दुर्योधन ।
- 'वितन्यते' पद में प्रकृति-प्रत्यय बताइए- वि + तन् + यक् + त।
- 'गतस्मयः' का अर्थ – **निरभिमानी।**
- त्रिगण किसको परस्पर बाधा नहीं डालते- दुर्योधन को।
- **"न बाधतेऽस्य त्रिगणः परस्परम्"** श्लोकांश में 'त्रिगणः' से क्या तात्पर्य है- धर्म, अर्थ, काम।
- "न बाधतेऽस्य त्रिगणः परस्परम्" में 'अस्य' पद बोधक है- **दुर्योधन**
- दुर्योधन की वाणी है- **दानयुक्त।**
- दुर्योधन का दानयुक्त है- सत्कार से।
- दुर्योधन द्वारा किया जानेवाला सत्कार किसके बिना नहीं होता- गुणों के प्रति अनुराग के बिना।
- **'निहन्ति दण्डेन स धर्मविप्लवम्'** किसके लिये कहा गया है - दुर्योधन के लिए।
- **"वसूनि वाञ्छन्न वशी न मन्युना"** में 'वशी' पद का प्रयोग हुआ है-दुर्योधन के लिए।
- **'स्वधर्म इत्येव निवृत्तकारणः'** - इस पंक्ति में 'निवृत्तकारणः' का अर्थ है- कारणरहित।
- 'वर्णिलिङ्गी' से किसका बोध हो रहा है- वनेचर का।
- 'कुरूणामधिपः' पद से किसका बोध होता है- सुयोधन ( दुर्योधन )
- **'प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्'** में 'यम्' पद से किसका बोध होता है - वनेचर का।
- 'स सौष्ठवौदार्यविशेषशालिनीं विनिश्चितार्थामिति वाचमाददे' में 'स' पद किसके लिए आया है- वनेचर।
- राजा और मन्त्री के अनुकूल रहने पर अनुराग करती हैं- **सर्वसम्पत्तियाँ**

  **'सदानुकूलेषु हि कुर्वते रतिं, नृपेष्वमात्येषु च सर्वसम्पदः'** यह किसके द्वारा कहा गया है - वनेचर के द्वारा।

- **'फलन्त्युपायाः परिबृंहितायतीः'** में 'उपाय' पद से तात्पर्य है- साम, दान, दण्ड, भेद
- **'उपेत्यसङ्घर्षमिवार्थसम्पदः'** में अलङ्कार है। उत्प्रेक्षा
- 'अदुम्मच्छदगन्धिः' का अर्थ क्या है- सप्तपर्ण वृक्ष के पुष्प की गन्ध
- "अशंकिताकारमुपैति शक्तिः यह कथन किसका है- वनेचर का
- **'विधाय रक्षान् परितः परेतरान्'** पंक्ति से वनेचर दुर्योधन की भेदनीति का वर्णन करता है।
- **'अनारतं तेन पदेषु लम्भिता'** में 'पदेषु' पद से तात्पर्य है- कार्यों से।
- 'तदीयमास्थाननिकेतनाजिरम्' में 'तदीयम्' से ग्रहण होता है – दुर्योधन।
- जो देश वर्षा पर निर्भर नहीं रहते हैं उन्हें कहा जाता है- **अदेवमातृक।**
- कृषीवल' का अर्थ है- किसान।
- 'वसूपमानस्य वसूनि मेदिनी' में दुर्योधन के गुणों की प्रशंसा की गई है।
- पृथ्वी के लिए प्रयुक्त पद है- मेदिनी।
- किरातार्जुनीयम् में 'उदारकीर्तेः' **विशेषण** दुर्योधन के लिए प्रयुक्त हुआ है ।
- **'उदारकीर्तेरुदयं दयावतः'** में **'दयावत'** पद का प्रयोग हुआ है- **दुर्योधन** के लिए।
- नकार को लेकर एकाक्षरी श्लोक लिखने वाले कवि भारवि हैं।
- किरातार्जुनीयम् में एकाक्षरी श्लोकों **की** संख्या-7 हैं।
- किरातार्जुनीयम् के प्रथम सर्ग में 46 श्लोक हैं और प्रारम्भ के 44 श्लोकों में **वंशस्थ** छन्द तथा 45 वें श्लोक में **पुष्पिताग्रा** छन्द हैं। 46 वें अंतिम श्लोक में- **मालिनी** छन्द है।

  **"विधिसमयनियोगाद्दीप्तिसंहारजिह्मं**
  **शिथिलवसुमगाधे मग्नमापत्पयोधौ ।**
  **रिपुतिमिरं उदस्योदीयमानं दिनादौ**
  **दिनकृतमिव लक्ष्मीस्त्वां समभ्येतुभूयः"** ।(46)

- शरद् ऋतु, 'इन्द्रकील' पर्वत वर्णन- **चतुर्थ सर्ग।**
- हिमालय पर्वत वर्णन-**पंचम सर्ग।**
- जलक्रीडा वर्णन- **अष्टमसर्ग,।**
- सन्ध्या,चन्द्रोदय और सुरत वर्णन- **नवमसर्ग।**
- वर्षादि वर्णन, अप्सराओं का चेष्टावर्णन- **दशमसर्ग।**
- मूकदानव वाराह मृत्यु- **त्रयोदशसर्ग,**
- शिव आगमन और अर्जुन सेना के साथ युद्ध- **चतुर्दशसर्ग,**

- चित्रायुद्ध वर्णन- **पंचदशसर्ग**,
- शिव और अर्जुन का अस्त्रयुद्ध- **षोडशसर्ग**,
- पाशुपत अस्त्र प्राप्ति- **अष्टादशसर्ग**,
- सम्भोग श्रृंगार का सुन्दर वर्णन- सर्ग 8 और 9 में।
- युद्धवर्णन में वीररस का वर्णन- सर्ग 13-17 तक।
- उपमा अलंकार का सुन्दर प्रयोग- सर्ग 13-17 तक।
- राजनीतिपरक महाकाव्य- किरातार्जुनीयम्।
- भारवि संस्कृत साहित्य में **"अलंकृतकाव्यशैली"** तथा **"विचित्रमार्ग"** के जनक हैं।
- अर्जुन तपस्या हेतु इन्द्रकील पर (हिमालय) पर जाते हैं। किरातार्जुनीयम् में दुर्योधन की तुलना की गयी है- **उरग** (सांप) से। धन जीतकर युद्धिष्ठिर को देता था- **अर्जुन।**

## किरातार्जुनीयम् में सर्गों के विशिष्ट सन्दर्भ-

महाकवि भारवि द्वारा रचित किरातार्जुनीयम् की कथा का मूलस्रोत महाभारत का वनपर्व रहां है। इन्द्र तथा शिव को प्रसन्न करने के लिए की गई अर्जुन तपस्या को आधार बनाकर कवि ने 18 सर्गों के महाकाव्य का वितान पल्लवित किया है।

**प्रथम सर्ग** का आरम्भ द्यूतक्रीड़ा में हारे हुए पाण्डवों के द्वैतवनवास में होता है। युधिष्ठिर यहाँ रहकर भी दुर्योधन की ओर से निश्चिन्त नहीं हैं। वे वनेचर को दुर्योधन की प्रजापालन सम्बन्धी नीति को जानने के लिए दूत बनाकर भेजते हैं। ब्रह्मचारी बना हुआ वनेचर लौटकर युधिष्ठिर के पास आता है और दुर्योधन के शासन की पूरी जानकारी देता है एवं इस बात का संकेत करता है कि जुए के बहाने से जीती हुई पृथ्वी को वह नीति से भी जीत लेने की चेष्टा में लगा है। सारी बातें बताकर वनेचर लौट जाता है और द्रौपदी आकर युधिष्ठिर को युद्ध करने के लिए उत्तेजित करती है एवं उसकी कायरता के लिये कटु शब्दों क प्रयोग करती है।

**द्वितीय सर्ग में-** भीम भी द्रौपदी सहित मिलकर युधिष्ठिर को युद्ध करने के लिए कहता है लेकिन युधिष्ठिर उसे मना कर देता है और उचित समय के आने की प्रतीक्षा करने के लिए कहता है, जब पाण्डवों के मित्र उनकी सहिष्णुता की प्रशंसा करें एवं दुर्योधन के दुर्व्यवहार से अपमानित राजा उससे अलग हो जाएँ। तब भगवान व्यास आते हैं। **तृतीय और चतुर्थ सर्ग-** युधिष्ठिर-व्यास संवाद, व्यास का अर्जुन को **पाशुपतास्त्र** की प्राप्ति के लिए हिमालय पर जाने का आदेश और अर्जुन का प्रस्थान है। हिमालय पर तपस्यार्थ जाते समय पर्वत, शरद् ऋतु और गोपालों आदि का वर्णन है। **पञ्चम सर्ग-** हिमालय की विशेषता बताकर और अर्जुन को तपस्या में लगाकर गृह्यक चला जाता है। **षष्ठ एवं सप्तम् सर्ग-** हिमालय पर अर्जुन की तपस्या को भंग करने के लिए इन्द्र अप्सराओं को भेजता है लेकिन वे अर्जुन के व्रत को भंग न कर सकीं। **अष्टम सर्ग-** गन्धर्वों एवं देवाङ्गनाओं का वन विहार एवं उनकी काम-क्रीड़ाओं का सरल एवं विस्तृत वर्णन के साथ उनके गंगा स्नान एवं क्रीडाओं का मनोरम वर्णन है। **नवम सर्ग-** सन्ध्या चन्द्रोदय, प्रभात का वर्णन है। **दशम एवं एकादश सर्ग-** अप्सराओं के अनेक **प्रयत्नों** के बावजूद अर्जुन की तपस्या को भंग करने में असफल होती हैं और **वापस** चली जाती है। अन्ततः अर्जुन की कठोर तपस्या को देखकर इन्द्र प्रसन्न होकर उसको शिव की तपस्या करने का उपदेश देता है । **द्वादश सर्ग-** अर्जुन पुनः तपस्या करता है। इधर एक मायावी दैत्य अर्जुन को मारने के लिए सूअर का रूप धारण करता है। इस बात को जानकर भगवान शिव अर्जुन की रक्षा हेतु किरात का मायावी वेश धारण करते हैं। **त्रयोदश एवं चतुर्दश सर्ग-** शूकर/सूअर के प्रवेश का वर्णन है।किरात तथा अर्जुन दोनों सूअर पर एक साथ बाण छोड़ते हैं। अर्जुन का बाण सुअर को मारकर पृथ्वी में घुस जाता है। बाद में बचे हुए बाण के लिए किरात और अर्जुन का वाद-विवाद चलता है।

**पञ्चदश, षोडश, सप्तदश सर्ग -** किरात और अर्जुन के मध्य हुआ वाद-विवाद युद्ध का रूप धारण कर लेता है। **अष्टादश सर्ग -** अर्जुन की वीरता से प्रसन्न होकर भगवान शिव प्रकट होते हैं और उसे पाशुपतास्त्र प्रदान कर विजयश्री का आशीर्वाद देतें हैं। इस प्रकार काव्य की पूर्ति होती है।

## किरातार्जुनीयम् प्रथम सर्ग की प्रमुख सूक्तियां-

- न हि प्रियं प्रवक्तु मिच्छन्ति मृषा हितैषिणः। (2 **वनेचर**)
- हितं मनोहारि च दुर्लभं वचः। (4 **वनेचर**)
- सदानुकूलेषु हि कुर्वते रतिं,
  नृपेष्वमात्येषु च सर्वसम्पदः। (5 **वनेचर**)
- वरं विरोधोऽपि समं महात्मभिः। (8 **वनेचर**)
- वसूपमानस्य वसूनि मेदिनि। (18 **वनेचर**)
- अहो दुरन्ता बलवद्विरोधिता। (23 **वनेचर**)
- प्रवृत्तिसाराः खलु मादृशां गिरः। (25 **वनेचर**)
- व्रजन्ति ते मूढधियः पराभवं,
  भवन्ति मायाविषु ये न मायिनः।
  प्रविश्य हि घ्नन्ति शठास्तथाविधान्
  असंवृताङ्गान्निशिता इवेषवः ॥(30 **द्रौपदी**)
- कथं न मन्युर्ज्वलयत्युदीरितः
  शमीतरुं शुष्कमिवाग्निरुच्छिखः।(32 **द्रौपदी**)
- अवन्ध्यकोपस्य विहन्तुरापदां
  भवन्तिवश्याः स्वयमेव देहिनः।
  अमर्षशून्येन जनस्य जन्तुना,
  न जातहार्देन न च विद्विषादरः॥ (33 **द्रौपदी**)
- महारथः सत्यधनस्य मानसं,
  दुनोति नो कच्चिदयं वृकोदरः (34 **द्रौपदी**)
  **वृकोदरः**- भीम
- विजित्य यः प्राज्यं अयच्छदुत्तरान्,
  कुरूनकुप्यं वसु वासवोपमः। (35)
  **(यः-अर्जुनः)**

➢ वनान्तशय्याकठिनीकृताकृती,
कचाचितौ विष्वगिवागजौ गजौ । (36)
- **अगजौ-** पर्वत में उत्पन्न हुए पर्वतीय
- **यमौ** – जुड़वा, युगल (नकुल, सहदेव)
- **कचाचितौ** – केशों से भरे हुए।

➢ विचित्ररूपाः खलु चित्तवृत्तयः। (37 द्रौपदी)
➢ पराभवोऽप्युत्सव एव मानिनाम्। (41 द्रौपदी)
➢ शमेन सिद्धिं मुनयो न भूभृतः। (42 द्रौपदी)
➢ निराश्रया हन्त हता मनस्विता (43)
➢ भवादृशेषु प्रमदाजनोदितं ।
➢ कुरुनकुप्यं वसु वासवोपम ।
➢ सहसा विदधीत न क्रियाम्- **युधिष्ठिर** (2/30),
➢ वसन्ति प्रेम्णि गुणा न वस्तुनि- (8/37)

### प्रथम सर्ग के प्रमुख शब्द-

- वर्णलिङ्गी में समास है – **षष्ठीतत्पुरुष**
- **वनेचरः** में समास है – **अलुक् तत्पुरुष**
- द्वैतवने वनेचरः में समास है – **वृत्त्यनुप्रास**
- **सुयोधनः** पद **में समास है** – उपपद तत्पुरुष
- **"विजित्य यः प्रयच्छदुत्तरान्....."** (यः- अर्जुन)
- 'महीभुजे' में विभक्ति- चतुर्थी।
- **चारचक्षुषः** – गुप्तचर ही जिनके नेत्र हैं। **"चरन्तीति चराः चराः एव चाराः. चाराः एव चक्षूंषि येषां ते चारचक्षुषः"**- (बहुव्रीहि)।
- विधाताय में धातु- **'धा'**।
- कृतप्रणामः में समास- **बहुव्रीहि**।
- वनेचर में प्रत्यय- **'ट'** प्रत्यय हैं ।
- धिनोति हव्येन् हिरण्यरेतसम्। (**हिरण्यरेतसम्**- अग्नि)
- प्रवृत्तिसारा खलु मादृशां गिरः। (खलु- निश्चय अर्थ)
- "दनुस्मृताखण्डलसूनुविक्रमः"(आखण्डल="इन्द्र")
(आखण्डलसूनु = "अर्जुन")
- "तवाभिधानाद्व्यथते नताननः"- (नतानन - दुर्योधन के लिये प्रयुक्त)
- स दुःसहाम्मन्त्रपदादिवोरगः- (उरग-सर्प) दुर्योधन के लिये प्रयुक्त उपमान)
- न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः- इसमें **'अर्थान्तरन्यास'** अलंकार है।
- हाथी से तुलना की गई है- नकुल, सहदेव की। **"कचाचितौ विष्वगिवागजौ गजौ..."**। (1.36)

# 4. शिशुपालवधम्

### परिचय-

**महाकवि माघ** द्वारा रचित शिशुपालवध की कथा भी भारवि के किरातार्जुनीय की तरह महाभारत के सभापर्व से गृहीत है। इसमें 20 सर्ग और 1650 श्लोक हैं। कृष्ण तथा शिशुपाल के वैर की, तथा युद्ध में कृष्ण के द्वारा शिशुपाल का वध किए जाने की कथा काव्य में वर्णित है कथा में शिशुपाल को हिरण्यकशिपु तथा रावण का इस जन्म का अवतरण माना है और शिशुपाल को कंस से भी बढ़कर नृशंस राजा के रूप में चित्रित किया गया है। शिशुपालवध द्वारिका से युधिष्ठिर के राजसूय यज्ञ में सम्मिलित होने के लिए कृष्ण शिशुपाल के द्वारा किए गए कृष्ण के अपमान तथा बाद में युद्ध के फलस्वरूप शिशुपाल के मारे जाने की कथा है।

## ॥प्रथमः सर्गः॥

श्रियः पतिः श्रीमति शासितुं जग-
जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमम्बराद्
हिरण्यगर्भाङ्गभुवं मुनिं हरिः॥1॥
गतं तिरश्चीनमनूरुसारथेः
प्रसिद्धमूर्ध्वं ज्वलनं हविर्भुजः ।
पतत्यधो धाम विसारि सर्वतः
किमेतदित्याकुलमीक्षितं जनैः॥2॥
चयस्त्विषामित्यवधारितं पुरस्ततः
शरीरिति विभाविताकृतिम् ।
विभुर्विभक्तावयवं पुमानिति
क्रमादमुं नारद इत्यबोधि सः॥3॥
नवानधोऽधो बृहतः पयोधरान्
समूढकर्पूरपरागपाण्डुरम् ।
क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना
स्फुटोपमं भूतिसितेन शंभुना॥4॥
दधानमम्भोरुहकेसरद्युती जटाः
शरच्चन्द्रमरीचिरोचिषम् ।
विपाकपिङ्गास्तुहिनस्थलीरुहो
धराधरेन्द्रं व्रततीततीरिव॥5॥
पिशङ्गमौञ्जीयुजमर्जुनच्छविं
वसानमेणाजिनमञ्जनद्युति ।
सुवर्णसूत्राकलिताधराम्बरां
विडम्बयन्तं शितिवाससस्तनुम्॥6॥
विहङ्गराजाङ्गरुहैरिवायतै-
र्हिरण्मयोर्वीरुहवल्लितन्तुभिः ।
कृतोपवीतं हिमशुभ्रमुच्चकै

र्घनं धनान्ते तडितां गणैरिव ॥7 ॥
निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा
लसद्विसच्छेदसिताङ्गसङ्गिना ।
चकासतं चारूचमूरुचर्मणा
कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥8 ॥
अजस्रमास्फालितवल्लकीगुण
क्षतोज्ज्वलांगुष्ठनखांशुभिन्नया ।
पुरः प्रवालैरिव पूरिताईया
विभान्तमच्छस्फटिकाक्षमालया ॥9 ॥
रण्ध्रिराघट्टनया नभस्वतः
पृथग्विभिनाश्रुतिमण्डलैः स्वरैः ।
स्फुटीभवद्ग्रामविशेषमूर्च्छना
मवेक्षमाणं महतीं मूहुर्मूहुः ॥10 ॥
निवर्त्य सो नुव्रजतः कृतानती
नतीन्द्रियज्ञाननिधिर्नभःसदः ।
समासदत् सादितदैत्यसम्पदः
पदं महेन्द्रालयचारु चक्रिणः ॥11 ॥
पतत्पतङ्गप्रतिमस्तपोनिधिः
पुरोस्य यावन्न भुवि व्यलीयत ।
गिरेस्तडित्वानिव तावदुच्चकैः
जवेन पीठादुदतिष्ठदच्युतः ॥12 ॥
अथ प्रयत्नोन्नमितानमत्फणैः
धृते कथंचित्फणिनां गणैरधः ।
न्यधायिषातामभिदेवकीसुतं
सुतेन धातुश्चरणौ भुवस्तले ॥13 ॥
तमर्घ्यमर्घ्यादिकयादिपूरुषः
सपर्यया साधु स पर्य्यपूपुजत् ।
गृहानुपैतुं प्रणयादभीप्सवो
भवन्ति नापुण्यकृतां मनीषिणः ॥14 ॥
न यावदेतावुदपश्यदुत्थितौ
जनस्तुषारासाराञ्जनपर्वताविव ।
स्वहस्तदत्ते मुनिमासने मुनि
श्चिरंतनस्तावदभिन्यवीविशत् ॥15 ॥
महामहानीलशिलारुचः पुरो
निषेदिवान् कंसकृषः स विष्टरे ।
श्रितोदयाद्रेरभिसायकमुच्चकै-
रचूचुरच्चन्द्रमसो भिरामताम् ॥16 ॥
विधाय तस्यापचितिं प्रसेदुषः
प्रकाममप्रीयत यज्वनां प्रियः ।
ग्रहीतुमार्यान् परिचर्यया मूहु
र्महानुभावा हि नितान्तमर्थिनः ॥17 ॥
अशेषतीर्थोपहताः कमण्डलो
र्निधाय पाणावृषिणाऽभ्युदीरिताः ।
अघौघविध्वंसविधौ पटीयसी
र्नतेन मूर्ध्ना हरिरग्रहीदपः ॥18 ॥
स काञ्चने यत्र मुनेरनुज्ञया
नवाम्बुदश्यामतनुर्न्यविक्षत ।
जिगाय जम्बूजनितश्रियः श्रियं
सुमेरुशृङ्गस्य तदा तदासनम् ॥19 ॥
स तप्तकार्तस्वरभास्वराम्बरः
कठोरताराधिपलाञ्छनच्छविः ।
विदिद्युते वाडवजातवेदसः
शिखाभिराश्लिष्ट इवाम्भसां निधिः ॥20 ॥
रथाङ्गपाणेः पटलेन रोचिषा
मृषित्विषः संवलिता विरेजिरे ।
चलत्पलाशान्तरगोचरास्तरो
स्तुषारमूर्तेरिव नक्तमंशवः ॥21 ॥
प्रफुल्लतापिच्छनिभैरभीशुभिः
शुभैश्च सप्तच्छदपांसुपाण्डुभिः ।
परस्परेण च्छुरितामलच्छवी
तदैकवर्णाविव तौ बभूवतुः ॥22 ॥
युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकासमासत ।
तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसंभवा मुदः ॥23 ॥
निदीघधामानमिवाधिदीधितिं
मुदा विकासं मुनिमभ्युपेयुषी ।
विलोचने बिभ्रदधिश्रितश्रिणी
स पुण्डरीकाक्ष इति स्फुटोऽभवत् ॥24 ॥
सितं सितिम्ना सुतरां मुनेर्वपु-
र्विसारिभिः सौधमिवाथ लम्भयन् ।
द्विजावलिव्याजनिशाकरांशुभिः
शुचिस्मितां वाचमवोचदच्युतः ॥25 ॥
हरत्यघं सम्प्रति हेतुरेष्यतः
शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं व्यनक्ति
कालत्रितयेऽपि योग्यताम् ॥26 ॥
जगत्यपर्याप्तसहस्रभानुना
न यन्नियन्तुं समभावि भानुना ।
प्रसह्य तेजोभिरसंख्यतां गतै
रदस्त्वया नुन्नमनुत्तमं तमः ॥27 ॥
कृतः प्रजाक्षेमकृता प्रजासृजा
सुपात्रनिक्षेपनिराकुलात्मना ।
सदोपयोगेऽपि गुरुस्त्वमक्षयो

निधिः श्रुतीनां धनसंपदामिव ॥28॥
विलोकनेनैव तवामुना मुने
कृतः कृतार्थोऽस्मि निबर्हितांहसा ।
तथापि शुश्रूषुरहं गरीयसी-
र्गिरोऽथवा श्रेयसि केन तृप्यते ॥29॥
गतस्पृहो प्यागमनप्रयोजनं
वदेति वक्तुं व्यवसीयते यया ।
तनोति नस्तामुदितात्मगौरवो
गुरुस्तवैवागम एष धृष्टताम् ॥30॥
इति ब्रुवन्तं तमुवाच स व्रती
न वाच्यमित्थं पुरुषोत्तम त्वया ।
त्वमेव साक्षात्करणीय इत्यतः
किमस्ति कार्य्यं गुरु योगिनामपि ॥31॥
उदीर्णरागप्रतिरोधकं जनै
रभीक्षणमक्षुण्णतयातिदुर्गमम् ।
उपेयुषो मोक्षपथं मनस्विन
स्त्वमग्रभूमिर्निपायसंश्रया ॥32॥
उदासितारं निगृहीतमानसै-
र्गृहीतमध्यात्मदृशा कथंचन ।
बहिर्विकारं प्रकृतेः पृथग्विदुः
पुरातनं त्वां पुरूषं पुराविदः ॥33॥
निवेशयामासिथ हेलयोद्धृतं
फणाभृतां छादनमेकमोकसः ।
जगत्त्रयैकस्थपतिस्त्वमुच्चकै
रहीश्वरस्तम्भशिरःसु भूतलम् ॥34॥
अनन्यगुर्व्यास्तव केन केवलः
पुराणमूर्तेर्महिमावगम्यते ।
मनुष्यजन्मापि सुरासुरान् गुणै
र्भवान् भवेच्छेदकरैः करोत्यधः ॥35॥
लघूकरिष्यन्नतिभारभङ्गुरा-
ममूं किल त्वं त्रिदिवादवातरः ।
उदूडलोकत्रितयेन सांप्रतं
गुरुर्धरित्री क्रियतेतरां त्वया ॥36॥
निजौजसोज्जासयितुं जगद्द्रुहा
मुपाजिहीथा न महीतलं यदि ।
समाहितैरप्यनिरूपितस्ततः
पदं दृशः स्याः कथमीश मादृशाम् ॥37॥
उपप्लुतं पातुमदो मदोद्धतै
स्त्वमेव विश्वंभर विश्वमीशिषे ।
ऋते रवेः क्षालयितुं क्षमेत कः
क्षपातमस्काण्डमलीमसं नभः ॥38॥
करोति कंसादिमहीभृतांवधाज्
जनो मृगाणामिव यत्तव स्तवम् ।
हरेर्हिरण्याक्षपुरः सुरासुर-
द्विपद्विषः प्रत्युत सा तिरस्क्रिया ॥39॥
प्रवृत एव स्वयमुज्झितश्रमः
क्रमेण पेष्टुं भुवनद्विषामसि ।
तथापि वाचालतया युनक्ति मां
मिथस्त्वदाभाषणलोलुभं मनः ॥40॥
तदिन्द्रसंदिष्टमुपेन्द्र यद्वचः
क्षणं मया विश्वजनीनमुच्यते ।
समस्तकार्येषु गतेन धुर्यता
महिद्विषस्तद्भवता निशम्यताम् ॥41॥
अभूदभूमिः प्रतिपक्षजन्मनां
भियां तनूजस्तपनद्युतिर्दितेः ।
यमिन्द्रशब्दार्थनिसूदनं हरे
र्हिरण्यपूर्वं कशिपुं प्रचक्षते ॥42॥
समत्सरेणासुर इत्युपेयुषा
चिराय नाम्नः प्रथमाभिधेयताम् ।
भयस्य पूर्वावतरस्तरस्विना
मनःसु येन द्युसदां व्यधीयत ॥43॥
दिशामधीशांश्चतुरो यतः सुरा
नपास्य तं रागहृताः सिषेविरे ।
अवापुरारभ्य ततश्चला इति
प्रवादमुच्चैरयशस्करं श्रियः ॥44॥
पुराणि दुर्गाणि निशातमायुधं
बलानि शूराणि घनाश्च कञ्चुकाः ।
स्वरूपशोभैकगुणानि नाकिनां
गणैस्तमाशङ्क्य तदादि चक्रिरे ॥45॥
स सञ्चरिष्णुर्भुवनान्तराणि यां
यदृच्छयाशिश्रियदाश्रयः श्रियः ।
अकारि तस्यै मुकुटोपलस्खल
त्करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः ॥46॥
सटाच्छटाभिन्नघनेन बिभ्रता
नृसिंह सैंहीमतनुं तनुं त्वया ।
स मुग्धकान्तास्तनसङ्गभङ्गुरै
रुरोविदारं प्रतिचस्करे नखैः ॥47॥
विनोदनिच्छन्नथ दर्पजन्मनो
रणेन कण्डूस्त्रिदशैः समं पुनः ।
स रावणो नाम निकामभीषणं
बभूव रक्षः क्षतरक्षणं दिवः ॥48॥
प्रभुर्बुभूषुर्भुवनत्रयस्य यः
शिरोऽतिरागाद्दशमं चिकर्तिषुः ।
अतर्कयद्विघ्नमिवेष्टसाहसः

प्रसादमिच्छासदृशं पिनाकिनः ॥49 ॥
समुत्क्षिपन् यः पृथिवीभृतां वरं
वरप्रदानस्य चकार शूलिनः ।
त्रसत्तुषाराद्रिसुताससंभ्रम
स्वयंग्रहाश्लेषमुखेन निष्क्रयम् ॥50 ॥
पुरीमवस्कन्द लुनीहि नन्दनं
मुषाण रत्नानि हरामराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा बली
य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥51 ॥
सलीलयातानि न भर्तुरभ्रमो
र्न चित्रमुच्चैःश्रवसः पदक्रमम् ।
अनुद्रुतः संयति येन केवलं
बलस्य शत्रुः प्रशशंस शीघ्रताम् ॥52 ॥
अशक्नुवन् सोढुमधीरलोचनः
सहस्ररश्मेरिव यस्य दर्शनम् ।
प्रविश्य हेमाद्रिगुहागृहान्तरं
निनाय बिभ्यद् दिवसानि कौशिकः ॥53 ॥
बृहच्छिलानिष्ठुरकण्ठघट्टनाद्
विकीर्णलोलाग्निकणं सुरद्विषः ।
जगत्प्रभोरप्रसहिष्णु वैष्णवं
न चक्रमस्याक्रमताधिकन्धरम् ॥54 ॥
विभिन्नशङ्खः कलुषीभवन्मुहु
र्मदेन दन्तीव मनुष्यधर्मणः ।
निरस्तगाम्भीर्यमपास्तपुष्पकं
प्रकम्पयामास न मानसं न सः ॥55 ॥
रणेषु तस्य प्रहिताः प्रचेतसा
सरोषहुङ्कारपराङ्मुखीकृताः ।
प्रहर्तुरेवोरगराजरज्जवो
जवेन कण्ठं सभयं प्रपेदिरे ॥56 ॥
परेतभर्तुर्महिषो मुना धनु
र्विधातुमुत्खातविषाणमण्डलः ।
हृतेऽपि भारे महतस्त्रपाभरा
दुवाह दुःखेन भृशानतं शिरः ॥57 ॥
स्पृशन् सशङ्कः समये शुचावपि
स्थितः कराग्रैरसमग्रपातिभिः ।
अघर्मघर्मोदकबिन्दुमौक्तिकै
रलंचकारास्य वधूरहस्करः ॥58 ॥
कलासमग्रेण गृहानमुञ्चता
मनस्विनीरुत्कयितुं पटीयसा ।
विलासिनस्तस्य वितन्वता रतिं
न नर्मसाचिव्यमकारि नेन्दुना ॥59 ॥
विदग्धलीलोचितदन्तपत्रिका
विधित्सया नूनमनेन मानिना ।
न जातु वैनायकमेकमुद्धृतं
विषाणमद्यापि पुनः प्ररोहति ॥60 ॥
निशान्तनारीपरिधानधूनन
स्फुटागसाप्यूरुषु लोलचक्षुषः ।
प्रियेण तस्यानपराधबाधिताः
प्रकम्पनेनानुचकम्पिरे सुराः ॥61 ॥
तिरस्कृतस्तस्य जनाभिभाविना
मुहुर्महिम्ना महसां महीयसाम् ।
बभार वाष्पैर्द्विगुणीकृतं तनु
स्तनूनपाद्धूमवितानमाधिजैः ॥62 ॥
परस्य मर्माविधमुज्झतां निजं
द्विजिह्वतादोषमजिह्मगामिभिः ।
तमिद्धमाराधयितुं सकर्णकैः
कुलैर्न भेजे फणिनां भुजङ्गता ॥63 ॥
तदीयमातङ्गघटाविघट्टितैः
कटास्थलप्रोषितदानवारिभिः ।
गृहीतदिक्कैरपुनर्निवर्तिभिः
श्चिराय याथार्थ्यमलम्भि दिग्गजैः ॥64 ॥
अभीक्ष्णमुष्णैरपि तस्य सोष्मणः
सुरेन्द्रवन्दीश्वसितानिलैर्यथा ।
सचन्दनाम्भःकणकोमलैस्तथा
वपुर्जलार्द्रापवनैर्न निर्ववौ ॥65 ॥
तपेन वर्षाः शरदा हिमागमो
वसन्तलक्ष्म्या शिशिरः समेत्य च ।
प्रसूनक्लृप्तं ददतः सदर्त्तवः
पुरेस्य वास्तव्यकुटुम्बितां ययुः ॥66 ॥
अमानवं जातमजं कुले मनोः
प्रभाविनं भाविनमन्तमात्मनः ।
मुमोच जानन्नपि जानकीं न यः
सदाभिमानैकधना हि मानिनः ॥67 ॥
स्मरत्यदो दाशरथिर्भवन् भवा
नमुं वनान्ताद्वनितापहारिणम् ।
पयोधिमाविद्धचलज्जलाविलं
विलङ्घ्य लङ्कां निकषा हनिष्यति ॥68 ॥
अथोपपत्तिं छलनापरो परा-
मवाप्य शैलूष इवैष भूमिकाम् ।
तिरोहितात्मा शिशुपालसंज्ञया
प्रतीयते संप्रति सोऽप्यसः परैः ॥69 ॥
स बालः आसीद्वपुषश्चतुर्भुजो
मुखेन पूर्णेन्दुरुनिभस्त्रिलोचनः ।
युवा कराक्रान्तमहीभृदुच्चकै-

रसंशयं संप्रति तेजसा रविः ॥70 ॥
स्वयं विधाता सुरदैत्यरक्षसा
भनुग्रहावग्रहयोर्यदृच्छया ।
दशाननादीनभिराद्धदेवता
वितीर्णवीर्यातिशयान् हसत्यसौ ॥71 ॥
बलावलेपादधुनापि पूर्ववत्
प्रबाध्यते तेन जगज्जिगीषुणा ।
सतीव योषित् प्रकृतिः सुनिश्चला
पुमांसमभ्येति भवान्तरेष्वपि ॥72 ॥
तदेनमुल्लङ्घितशासनं विधे-
र्विधेहि कीनाशनिकेतनातिथिम् ।
शुभेतराचारविपक्रिमापदो
निपादनीया हि सतामसाधवः ॥73 ॥
हृदयमरिवधोदयादुदूढ-
प्रढिम दधातु पुनः पुरन्दरस्य ।
धनपुलकपुलोमजाकुचाग्र
द्रुतपरिरम्भनिपीडनक्षमत्वम् ॥74 ॥
ओमित्युक्तवतोथ शार्ङ्गिण इति व्याहृत्य वाचं नभ-
स्तस्मिन्नुत्पतितं पुरः सुरमुनाविन्दोः श्रियं बिभ्रति ।
शत्रूणामनिशं विनाशपिशुनः क्रुद्धस्य चैद्यं प्रति
व्योम्नीव भृकुटिच्छलेन वदने केतुश्चकारास्पदम् ॥75 ॥

## शिशुपालवधम् के प्रमुख अंश-

**॥मगंलाचरण ॥** (वस्तुनिर्देशात्मक)

"श्रियः पतिः **श्रीमति** शासितुं जगत्,
**जगन्निवासः** वसुदेवसद्मनि।
**वसन्ददर्शावतरन्तमम्बरात्।**
**हिरण्यगर्भाङ्गभुवं मुनिं हरिः"।**

लक्ष्मी (रुक्मिणी) के पति, समस्त जगत् के निवास (आधार) भगवान विष्णु (श्रीकृष्ण), जिस समय जगत का नियन्त्रण करने के लिए श्रीसम्पन्न वसुदेव के घर निवास कर रहे थे, उसी समय आकाश से नीचे उतरते हुए उन्होंने हिरण्यगर्भ (ब्रह्माण्ड से उत्पन्न होने वाले भगवान ब्रह्मा) के पुत्र नारद मुनि को देखा ।

| | | |
|---|---|---|
| **छन्द** | - | वंशस्थ, पुष्पिताग्रा, शार्दूलविक्रीडितम् । |
| **लेखक** | - | महाकवि माघ |
| **पिता** | - | दत्तक, |
| **पितामह** | - | सुप्रभदेव, |
| **विधा** | - | महाकाव्य पंचमहाकाव्यों तथा बृहत्रयी में एक, |
| **उपजीव्य काव्य** | - | महाभारत सभापर्व, |
| **सर्ग** | - | 20, |
| **पद्य** | - | (1650), |
| **प्रथम सर्ग** | - | 75 **श्लोक,** |
| **नायक** | - | कृष्ण, |
| **अंगी रस** | - | वीर, |
| **अंग रस** | - | अन्य सभी, |
| **स्थायी भाव** | - | उत्साह, |
| **प्रथम सर्ग नाम** | - | कृष्णनारदसम्भाषणम्, |
| **द्वितीय सर्ग** | - | मन्त्रवर्णनात्मक, |
| **माघ टीका** | - | सर्वङ्कषा (मल्लिनाथ) |

## प्रमुख वर्णन-

- रैवतकपर्वत वर्णन- **चतुर्थ सर्ग,**
- विहार वर्णन- **पंचम** सर्ग,
- छः ऋतुओं का वर्णन- **षष्ठम् सर्ग,**
- श्रीकृष्ण यादवों का वनविहार वर्णन- **सप्तम् सर्ग,**
- जलविहार- **अष्टम् सर्ग,**
- सूर्यास्त- **नवम् सर्ग,**
- मद्यपान तथा संभोग- **दशम् सर्ग,**
- प्रभा वर्णन- **एकादश** सर्ग,
- **यमुना वर्णन**- द्वादश सर्ग,
- राजसूय यज्ञ वर्णन, तथा ब्राह्मणादक्षिणा वर्णन- **चतुर्दश सर्ग,**
- युद्ध वर्णन- **अष्टादश** सर्ग,
- शिशुपाल वध- **विंश** सर्ग ।

## शिशुपालवधम् प्रथम सर्ग के मुख्य सन्दर्भ-

- वसुदेव के घर का विशेषण- **'श्रीमति शासितुं जगत्'।**
- जगन्निवासः वसुदेवसद्मनि देवता- **लक्ष्मी,**
- **श्री शब्द** से मंगलाचरण किया है तथा प्रत्येक सर्ग के अन्तिम श्लोकों में श्री शब्द का प्रयोग किया है।
- द्वारकावासी लोगों के द्वारा तेजस्वरूप **नारद** को विस्मयपूर्वक देखा गया।
- ब्रह्मा के मानसपुत्र – **महर्षि नारद।**
- शिशुपालवधम् के प्रथम सर्ग में नारद का नारद का 7 श्लोकों में वर्णन किया गया है।
- नारद की वीणा- **महती,**
- शिशुपालवधम् के प्रथम सर्ग में नारद का सादृश्य क्रमशः दिखाया गया है- **शिव, हिमालय, बलभद्र, शरद् मेघ, ऐरावत,** से।

- दैत्यों की सम्पत्ति को नष्ट करने वाले – **श्रीकृष्ण, (सादितदैत्यसम्पदः1.11)**
- आदिपुरुष श्रीकृष्ण ने पूज्य महर्षि नारद की अर्घ्य आदि सामग्री से उत्तम रीति से अर्चना की।
- राक्षसों के अतिभार से स्वयं विदीर्ण होनेवाली पृथ्वी को हल्का (भारहीन) करने के लिए अवतीर्ण हुए हैं - **श्रीकृष्ण।**
- नारद कृष्ण कें पास इन्द्र के वचनों को सुनाने आए थे।
- इन्द्र के इन्द्र शब्द के अर्थ का (ऐश्वर्य का) नाश करने वाला – **हिरण्यकशिपु। (यमिन्द्रशब्दार्थनिषूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते)**
- हिरण्यकशिपु ने देवताओं के हृदय में भय उत्पन्न कर दिया था।
- रावण के भय से इन्द्र ने सुमेरू पर्वत की गुफा में कई दिनों तक डरते हुए दिनों को बिताया।
- षड्ऋतुओं के द्वारा रावण की सेवा की जाती थी।
- पुराणों के अनुसार वैकुण्ठ के द्वारपाल **'जय'**और **'विजय'** को शापवश राक्षस होना पड़ा। जिससे तीन जन्मों तक वे विभिन्न रूपों में उत्पन्न हुए-
  **प्रथम जन्म - 'हिरण्यकशिपु'** तथा **'हिरण्याक्ष'।**
  **द्वितीय जन्म- 'रावण'** तथा **'कुम्भकर्ण'।**
  **तृतीय जन्म - 'शिशुपाल'** तथा **'दन्तवक्र'।**
- **हिरण्यकशिपु'** - दिति का पुत्र जिसने देवताओं के मन में भय उत्पन्न किया।
- इसमें रावण की- कुबेरविजय, वरुणविजय, यमविजय, सूर्यविजय, चन्द्रविजय, गणेशविजय, अग्निविजय, वायुवशीकार, नागलोकविजय, दिग्विजय,सकलभुवनविजय, सुराङ्गना विलास, कालविजय,वर्णित है।
- शिशुपालवधम् के द्वितीय सर्ग का नाम है- **मन्त्रवर्णनात्मक।**
- शिशुपालवधम् के प्रथम सर्ग का 75 वाँ अन्तिम श्लोक **'शार्दूलविक्रीडित'** छन्द में है।
- शिशुपालवधम् के प्रथम सर्ग का 74 वाँ श्लोक पुष्पिताग्रा छन्द में है।

## शिशुपालवधम् में सर्गों के विशिष्ट सन्दर्भ-

- ❖ **प्रथम सर्ग**- का आरम्भ देवर्षि नारद के आगमन से होता है। वे पृथ्वी पर कृष्ण से मिलने आते हैं। उनको आता देख कृष्ण उनसे आने का कारण पूछते नारद बताते हैं कि शिशुपाल के अत्याचार से डरे इन्द्र ने उन्हें भेजा है। कृष्ण उसका वध करें और इन्द्र के हृदय को भयरहित बनाकर उसे आमोद-प्रमोद से उल्लसित बनाएँ। नारद चले जाते हैं।
- ❖ **द्वितीय सर्ग** - कृष्ण, बलराम और उद्धव **मन्त्रणागृह** में बैठकर विचार-विमर्श करते हैं।
- ❖ **तृतीय सर्ग/चतुर्थ सर्ग** - पर्वत का अलंकृतवर्णन है। कृष्ण की सेना इन्द्रप्रस्थ के लिए रवाना होती है।
- ❖ **पञ्चम सर्ग** - सेना के रैवतक पर्वत पर पड़ाव डालने का **वर्णन है।**
- ❖ **षष्ठ सर्ग** - कृष्ण की सेवा के लिए **छःवों ऋतुएँ** रैवतक पर्वत पर अवतीर्ण होती हैं।
- ❖ **सप्तम सर्ग** - यदुदम्पतियों का विलासपूर्ण **वनविहार वर्णित है।**
- ❖ **अष्टम सर्ग में**- जलक्रीडा।
- ❖ **नवम् सर्ग** - दूतीकर्म, आहार्य-प्रस्थापन **की शोभा** आदि का वर्णन है।
- ❖ **दशम् सर्ग**- सुरा-सुन्दरी के सेवन का **विलासपूर्ण वर्णन हैं।**
- ❖ **एकादश सर्ग** - प्रातःकाल का वर्णन है।
- ❖ **द्वादश सर्ग** -सेनाप्रवाण का वर्णन है।
- ❖ **त्रयोदश सर्ग** - इन्द्रप्रस्थ की पुरनारियों **का वर्णन** है।
- ❖ **चतुर्दश सर्ग** – यज्ञ का वर्णन है और **इसी सर्ग** में कृष्ण **की पूजा की** जाती है।
- ❖ **पंचदश सर्ग** - शिशुपाल कृष्ण की पूजा **का** विरोध करता है।
- ❖ **षोडश सर्ग** - शिशुपाल का दूत आकर **कृष्ण को** सन्देश सुनाता है कि या तो वह शिशुपाल की अधीनता **मानें या** युद्ध के लिये तैयार हो जाएँ।
- ❖ **सप्तदश, अष्टावश सर्ग**- सेना की तैयारी
- ❖ **नवदश एवं विशति सर्ग** -युद्ध का वर्णन है **और** अन्त में श्रीकृष्ण अपने सुदर्शन चक्र से उसका सिर काट देते हैं एवं उसका तेज श्रीकृष्ण में विलीन होने के साथ काव्य समाप्त होता है।

## प्रथम सर्ग के प्रमुख शब्दार्थ-

**हिरण्यगर्भाङ्गभुवं मुनिम्**- नारद, **शितिवास/नीलाम्बर/बलभद्र**- बलराम, **अर्जुनच्छवि**- धवलकान्ति(नारद), **विहङ्गराजा**- गरुड़, **चमूरु**- मृगचर्म से युक्त (नारद), **उपेन्द्र**- कृष्ण, **एणाजिन**- मृगचर्म, **अनूरसारथि**- सूर्य, **नभःसदः**- देव, **धाम**- तेज, **चमरी**- मृगी, **अर्जुनच्छवि**- धवलकान्ति/गौरवर्ण(नारद), **व्रततीततीः**- लतासमूह, **धातु**- ब्रह्मा, **नुमचिद्विष**- इन्द्र, **शार्ङ्गिण**- कृष्ण, **धराधरेन्द्र**- हिमालय, **अञ्जनद्युति**- काले वर्ण की (नारद की मृगचर्म), **प्रवाल**- मूँगा, **अजस्रम्**- निरन्तर, **नभस्वतः**- पवन, **आघट्टनया**- आघात से, **अतीन्द्रियज्ञाननिधि**- नारद, **सादित्यदैत्यसम्पदः**- कृष्ण, **चक्रिण**- कृष्ण, **धातु**- ब्रह्मा, **धातुसुत**- नारद, **आदिपुरुष**- कृष्ण, **चिरन्तनमुनि(पुराणमुनि)**- कृष्ण, **तुषाराञ्जनपर्वत**- नारद और कृष्ण, **महानीलशिला**- इन्द्रनीलमणि, **यज्वनां प्रिय**- कृष्ण, **नवाम्बुदश्यामतनुः**- कृष्ण, **कार्त्तस्वर**- सुवर्ण, **रथाङ्गपाणि**- कृष्ण, **तुषारमूर्ति**- चन्द्रमा, **सप्तच्छद**- वृक्ष(प्रत्येक गुच्छ में सात पत्र होने से), **तापिच्छ**- तमालपुष्प, **पुण्डरीक**- श्वेतकमल **"पुण्डरीकं सिताम्भोजं"**, **निदाधधामानम्**- सूर्य, **प्रजासृजा**- ब्रह्मा, **श्रुतीनां निधिः**- नारद,

व्रती- नारद, **जगत्त्यैकस्थपति**- तीनों लोकों के एकमात्र शिल्पी(कृष्ण), **पुराणमूर्ति**- कृष्ण, **त्रिदिवादवातरः**- कृष्ण, **अहिद्विषः**- इन्द्र, **तपनद्युतिः**- सूर्य के समान तेज वाला(हिरण्यकशिपु), **कञ्चुकाः**- कवचः, **त्रिदशैः**- देव, **शूलिन**- शिव, **तुषाराद्रिसुता**- पार्वती, **नुमचिद्विष**- इन्द्र, **बलस्य शत्रु**- इन्द्र, **अभ्रमोः भर्तु**- एरावत हाथी, **उच्चैः श्रवस**- उच्चैश्रवा नामक घोड़ा, **कौशिक**- इन्द्र/उल्लू, **हेमाद्रि**- सुमेरु पर्वत, **अधिकन्धरम्**- कण्ठ, **मनुष्यधर्मण**- कुबेर, **प्रचेतस**- वरुण, **उगराजरज्जवः**-नागपाश, **परेतभर्तुः**- यमराज, **अहस्करः**- सूर्य, **तनूनपात**- अग्नि, **आधिज**- मानसिक व्यथा, **अघर्मघर्मोदक**- शीतल स्वेद, **प्रसूनक्लृप्तिम्**- पुष्पसम्पत्ति, **शैलूष**- नट, **कीनाशनि**- यमराज, **शार्ङ्गिण**- कृष्ण(शार्ङ्ग धनुष), **द्युसदाम्**-देवता, **कञ्चुकाः**- कवच, **विभिन्नशङ्खः**- शङ्ख नामक निधि, **पटीयसी**- समर्थतर (जल के अर्थ में), **पटीयसा**- अत्यन्त चतुर, **समत्सरेण**- दूसरों के शुभ क द्वेषी, **अस्वास्थ्यम्**- उपद्रव, **अधीरलोचनः**- इन्द्र।

## शिशुपालवधम् प्रथम सर्ग की प्रमुख सूक्तियाँ-

➢ गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वं ज्वलनम् हविर्भुजः ।(2)

❖ **नारद का शिवसादृश्य-**
नवानधोऽधो बृहतः पयोधरान् समूढ-कपूर्-पराग-पाण्डुरम्।
क्षणक्षणोत्क्षिप्त-गजेन्द्र-कृत्तिना स्फुटोपमं भूतिसितेन शम्भुना ॥(4)

❖ **नारद का बलराम सादृश्य-**
पिशङ्गमौञ्जीयुजमर्जुनच्छविं वसानमेणाजिनमञ्जनद्युति।

➢ सुवर्णसूत्राकलिताधराम्बरां विडम्बयन्तं शितिवाससस्तनुम्। (6)
**शितिवास**- बलभद्र,

➢ पदं महेन्द्रालयचारु चक्रिणः ॥ (11)

❖ **नारद पूजन-**
गृहानुपैतं प्रणयादभीप्सवो भवन्ति नापुण्यकृतां मनीषिणः। (14) (नारद)

❖ **श्रीकृष्णस्य पुरो नारदस्य चन्द्रसाम्य-**
महामहानीलशिलारुचः पुरो निषेदिवान् कंसकृषः स विष्टरे।
श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम् ॥ (16)

➢ गृहीतुमार्यान् परिचर्यया मुहुर्महानुभावा हि नितान्तमर्थिनः ॥ (17)

❖ **श्रीकृष्ण समुद्रसादृश्य -**
स तप्तकार्तस्वरभास्वराम्बरः कठोरताराधिपलाञ्छनच्छविः।
विदिद्युते वाडवजातवेदसः शिखाभिराश्लिष्ट इवाम्भसां निधिः ॥ (20) कार्तस्वर - 'सुवर्ण'

❖ **श्रीकृष्णकृतां नारदप्रशंसा-**
हरत्ययं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥(26)

❖ **नारदस्य सूर्याधिक्यं -**
जगत्यपर्याप्तसहस्रभानुना न यन्नियन्तुं समभावि भानुना।
प्रसह्य तेजोभिरसंख्यतां गतैरदस्त्वया नुत्तमनुत्तमं तमः ॥ (27)

➢ श्रेयसि केन तृप्यते- **कृष्ण** 29

➢ त्वमेव साक्षात्करणीय इत्यतः किमस्ति कार्यं गुरु योगिनामपि। (नारद 31)

❖ **योगियों के भी कृष्ण साक्षात्करणीय -**
उदीर्णरागप्रतिरोधकं जनैरभीक्ष्णमक्षुण्णतयाऽतिदुर्गमम्।
उपेयुषो मोक्षपथं मनस्विनस्त्वमग्रभूमिर्निरपायसंश्रया ॥ (32)

➢ बहिर्विकार प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः ॥ **(नारद** 33)

❖ **कृष्ण महिमा-**
मनुष्यजन्माऽपि सुराऽसुरान् गुणैर्भवान्भवच्छेदकरैः करोत्यधः। **(नारद>**कृष्ण 35)

➢ लघूकरिष्यन्नतिभारभङ्गुराममूं किल त्वं त्रिदिवादवातरः। **(नारद>**कृष्ण 36)

❖ **कृष्ण अवतार महिमा-**
पदं दृशः स्याः कथमीश! मादृशाम् ॥ (37 नारद)

❖ **रात्रि का अन्धकार सूर्य ही दूर कर सकता है-**
ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः। **(नारद** 38)

➢ करोति कंसादिमहीभृतां वधाज्जनो मृगाणमिव यत्तव स्तवम्।**(नारद** 39)

❖ **हिरण्यकश्यप वध-**
स मुग्धकान्तास्तनसङ्गभङ्गुरैरुरोविदारं प्रतिचस्करे नखैः ॥ **(नारद>**कृष्ण 47)

❖ **रावणस्य स्वर्गलुण्ठनम्-**
पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः।(51)

❖ **रावणभयात्पलाप्यान्तर्हितस्येन्द्रस्य उलूकसादृश्यमाह-**
प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः। (नारद 53) **कौशिक**- उल्लू, इन्द्र, **हेमाद्रि**- सुमेरु पर्वत ।

❖ **विष्णु के चक्र के द्वारा भी रावण की गर्दन पर कोई प्रभाव नहीं हुआ-**
जगत्प्रभोरप्रसहिष्णु वैष्णवं न चक्रमस्याक्रमताधिकन्धरम् ।
इस श्लोकांश में वैष्णव पद प्रयुक्त हुआ है-विष्णु-उपासक को।(54)

❖ **रावणस्य कुबेरविजय -**
विभिन्नशङ्खः कलुषीभवन्मुहुर्मदेन दन्तीव मनुष्यधर्मणः।(55)
**मनुष्यधर्मी**- कुबेर,

➢ **पुष्पकविमान**- कुबेर का।

❖ **रावणस्य वरुणविजय-**

➢ रणेषु तस्य प्रहिताः प्रचेतसा सरोषहुङ्कारपराङ्मुखीकृताः ।
प्रहर्तुरेवोरगराजरज्जवो जवेन कण्ठं सभयं प्रपेदिरे ॥ 56 ॥

- ❖ **रावणस्य यममहिषविजय-**
  हृतेऽपि भारे महतस्त्रमाभरा दुवाह दुःखेन भृशानतं शिरः ॥ (57) **भृशानतं**-यम के लिए प्रयुक्त,
- ❖ **रावणस्य कालविजयम् (षड्तुओं द्वारा रावण की सेवा)-**
  तपेन वर्षाः शरदा हिमागमो वसन्तलक्ष्म्या शिशिरः समेत्य च। (65) **तपेन**- ग्रीष्म ऋतु,
- ➢ सदाभिमानैकधना हि मानिनः।(नारद 67-रावण के लिये प्रयुक्त)
- ❖ **शिशुपाल स्वरूप-**
- ➢ स बाल आसीद् वपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभिस्त्रिलोचनः। (70) **स- शिशुपाल,**
- ➢ सतीव योषित्प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि। (72)
- ➢ हिरण्यगर्भाङ्गभूः स्वभाव मुनिः- **(नारद)**
- ➢ "निधि श्रुतीनां धनसम्पदामिव" - वेदों का निधि - **नारद।**
- ➢ ''न चक्रमस्याक्रमताधिकन्धरम्'' कस्य...? - **रावणस्य।**
- ❖ **रावण का तप शौर्य वर्णन-**
- ➢ प्रभुर्बुभूषुर्भुवनत्रयस्य यः शिरोऽतिरागाद् दशमं चिकर्तिषुः। (49 **नारद)**
- ➢ तदेनमुल्लङ्घितशासनं विधेर्विधे हि कीनाशनिकेतनातिथिम्। (**कीनाशनि**- यमराज) (73)

# 5. नैषधीयचरितम्

## परिचय-

**महाकवि श्रीहर्ष** द्वारा विरचित **नैषधीयचरितम्** एक बहुत बड़ा काव्य है। जिसमें **22 सर्ग** हैं और प्रत्येक सर्ग में सौ से अधिक पद्य है। 18वें और 19वें सर्ग को छोड़कर, जिनमें केवल 56 और 68 पद्य है, बाकी सभी सर्ग बड़े हैं; कई में तो 150 पद्यों के लगभग हैं। महाकाव्य के इस विशाल आलवाल को देखते हुए श्रीहर्ष ने नलचरित से सम्बद्ध जितनी-भी कथा ली है, वह छोटी है। दमयन्ती तथा नल के प्रेम को लेकर उनके विवाह और विवाहोपरान्त क्रीडाओं आदि का वर्णन कर काव्य को समाप्त कर दिया गया है।

## ॥प्रथमः सर्गः ॥

निपीय यस्य क्षितिरक्षिणः कथां,
तथाद्रियन्ते न बुधाः सुधामपि ।
नला सितच्छत्रितकीर्तिमण्डलः,
स राशिरासीन्महसां महोज्ज्वलः ॥1॥
रसैः कथा यस्य सुधावधीरणी,
नलः स भूजानिरभूद्गुणाद्भुतः ।
सुवर्णदण्डैकसितातपत्रित,
ज्वलत्प्रतापावलिकीर्तिमण्डलः ॥2॥
पवित्रमत्रातनुते जगद्युगे,
स्मृता रसक्षालनयेव यत्कथा ।
कथं न सा मद्गिरमाविलामपि,
स्वसेविनीमेव पवित्रयिष्यति ॥3॥
अधीतिबोधाचरणप्रचारणैः,
दशाश्चतस्रः प्रणयन्नुपाधिभिः ।
चतुर्दशत्वं कृतवान्कुतः स्वयं,
न वेद्मि विद्यासु चतुर्दश स्वयम् ॥4॥
अमुष्य विद्या रसनाग्रनर्तकी,
त्रयीव नीताङ्गगुणेन विस्तरम् ।
अगाहताष्टादशतां जिगीषया,
नवद्वयद्वीपपृथग्जयश्रियाम् ॥5॥
दिगीशवृन्दांशविभूतिरीशिता,
दिशां स कामप्रसरावरोधिनीम् ।
बभार शास्त्राणि दृशं द्वयाधिकां,
निजत्रिनेत्रावतरत्वबोधिकाम् ॥6॥
पदैश्चतुर्भिः सुकृते स्थिरीकृते,
कृतेऽमुना के न तपः प्रपेदिरे ।
भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन्,
दधावधर्मोऽपि कृशस्तपस्विताम् ॥7॥
यदस्य यात्रासु बलोद्धतं रजः,
स्फुरत्प्रतापानलधूममञ्जिम ।
तदेव गत्वा पतितं सुधाम्बुधौ,
दधाति पङ्कीभवदङ्कतां विधौ ॥8॥
स्फुरद्धनुर्निस्वनतद्घनाशुग,
प्रगल्भवृष्टिव्ययितस्य संगरे ।
निजस्य तेजः शिखिनः परश्शता,
वितेनुरङ्गालमिवायशः परे ॥9॥
अनल्पदग्धारिपुरानलोज्ज्वलैः,
निजप्रतापैर्वलयं ज्वलद्भुवः ।
प्रदक्षिणीकृत्य जयाय सृष्ट्या,
रराज नीराजनया स राजघः ॥10॥
निवारितास्तेन महीतलेऽखिले,
निरीतिभावं गमितेऽतिवृष्टयः ।
न तत्यजुर्नूनमनन्यसंश्रयाः,
प्रतीपभूपालमृगीदृशां दृशः ॥11॥
सितांशुवर्णैर्वयति स्म तद्गुणैः,
महासिवेम्नः सहकृत्वरी बहुम् ।
दिगङ्गनाङ्गाभरणं रणाङ्गणे,
यशः पटं तद्भटचातुरीतुरी ॥12॥
प्रतिपभूपैरिव किं ततो भिया,

विरुद्धधर्मैरपि भेत्तृतोज्झिता ।
अमित्रजिन्मित्रजिदोजसा स यद्,
विचारदृक्चारदृगप्यवर्तत ॥13॥
तदोजसस्तद्यशसः स्थिताविमौ,
वृथेति चित्ते कुरुते यदा यदा ।
तनो ति भानोः परिवेषकैतवात्,
तदा विधिः कुण्डलनां विधोरपि ॥14॥
अयं दरिद्रो भवितेति वैधसीं,
लिपिं ललाटेऽर्थिजनस्य जाग्रतीम् ।
मृषां न चक्रेऽल्पितकल्पपादपः,
प्रणीय दारिद्रदरिद्रतां नलः ॥15॥
विभज्य मेरुर्न यदर्थिसात्कृतो,
न सिन्धुरुत्सर्गजलव्ययैर्मरुः ।
अमानि तत्तेन निजायशोयुगं,
द्विफालबद्धाश्चिकुराः शिरः स्थितम् ॥16॥
अजस्रमभ्यासमुपेयुषा समं,
मुदैव देवः कविना बुधेन च ।
दधौ पटीयान्समयं नयन्नयं,
दिनेश्वरश्रीरुदयं दिने दिने ॥17॥
अधोविधानात्कमलप्रवालयोः,
शिरः सु दानादखिलक्षमाभुजाम् ।
पुरेदमूर्ध्वं भवतीति वेधसा,
पदं किमस्याङ्कितमूर्ध्वरेखया ॥18॥
जगज्जयं तेन च कोशमक्षयं,
प्रणीतवान् शैशवशेषवानयम् ।
सखा रतीशस्य ऋतुर्यथा वनं,
वपुस्तथालिङ्गदथास्य यौवनम् ॥19॥
अधारि पद्मेषु तदङ्घ्रिणा घृणा,
क्व तच्छयच्छायलवोऽपि पल्लवे ।
तदास्यदास्येऽपि गतोऽधिकारितां,
न शारदः पार्श्विकशर्वरीश्वरः ॥20॥
किमस्य लोम्नां कपटेन कोटिभिः,
विधिर्न लेखाभिरजीगणद्गुणान् ।
न रोमकूपौघमिषाज्जगत्कृता,
कृताश्च किं दूषणशून्यबिन्दवः ॥21॥
अमुष्य दोर्भ्यामरिदुर्गलुण्ठने,
ध्रुवं गृहीतार्गलदीर्घपीनता ।
उरः श्रिया तत्र च गोपुरस्फुरत्,
कपाटदुर्धर्षतिरः प्रसारिता ॥22॥
स्वकेलिलेशस्मितनिन्दितेन्दुनो,
निजांशदृक्तर्जितपद्मसंपदः ।
अतद्द्वयीजित्वरसुन्दरान्तरे,
न तन्मुखस्य प्रतिमा चराचरे ॥23॥
सरोरुहं तस्य दृशैव निर्जितं,
जिताः स्मितेनैव विधोरपि श्रियः ।
कुतः परं भव्यमहो महीयसी,
तदाननस्योपमितौ दरिद्रता ॥24॥
स्वबालभारस्य तदुत्तमाङ्गजैः,
समं चमर्यैव तुलाभिलाषिणः ।
अनागसे शंसति बालचापलं,
पुनः-पुनः पुच्छविलोलनच्छलात् ॥25॥
महीभृतस्तस्य च मन्मथश्रिया,
निजस्य चित्तस्य च तं प्रतीच्छया ।
द्विधा नृपे तत्र जगत्त्रयीभुवां,
नतभ्रुवां मन्मथविभ्रमोऽभवत् ॥26॥
निमीलनभ्रंशजुषा दृशा भृशं,
निपीय तं यस्त्रिदशीभिरर्जितः ।
अमूस्तमभ्यासभरं विवृण्वते,
निमेषनिः स्वैरधुनापि लोचनैः ॥27॥
अदस्तदाकर्णि फलाढ्यजीवितं,
दृशोर्द्वयं नस्तदवीक्षि चाफलम् ।
इति स्म चक्षुः श्रवसां प्रिया नले,
स्तुवन्ति निन्दन्ति हृदातदात्मनः ॥28॥
विलोकयन्तीभिरजस्रभावना,
बलादमुं नेत्रनिमीलनेष्वपि ।
अलम्भि मर्त्याभिरमुष्य दर्शने,
न विघ्नलेशोऽपि निमेषनिर्मितिः ॥29॥
न का निशि स्वप्नगतं ददर्श,
तं जगाद गोत्रस्खलिते च का न तम् ।
तदात्मताध्यातधवा रते च का,
चकार वा न स्वमनोभवोद्भवम् ॥30॥
श्रियास्य योग्याहमिति स्वमीक्षितुं,
करे तमालोक्य सुरूपया धृतः ।
विहाय भैमीमपदर्पया कया,
न दर्पणः श्वासमलीमसः कृतः ॥31॥
यथोह्यमानः खलु भोगभोजिना,
प्रसह्य वैरोचनिजस्य पत्तनम् ।
विदर्भजाया मदनस्तथा मनो,
नलावरुद्धं वयसैव वेशितः ॥32॥
नृपेऽनुरूपे निजरूपसंपदां,
दिदेश तस्मिन्बहुशः श्रुतिं गते ।
विशिष्य सा भीमनरेन्द्रनन्दना,
मनोभवाज्ञैकवशंवदं मनः ॥33॥
उपासनामेत्य पितुः स्म रज्यते,

दिने दिने सावसरेषु बन्दिनाम् ।
पठत्सु तेषु प्रतिभूपतीनलं,
विनिद्ररोमाजनि शृण्वती नलम् ॥34॥
कथा प्रसङ्गेषु मिथः सखीमुखात्,
तृणेऽपि तन्व्या नलनामनि श्रुते ।
द्रुतं विधूयान्यदभूयतानया,
मुदा तदाकर्णनसज्जकर्णया ॥35॥
स्मरात्परासोरनिमेषलोचनाद्,
बिभेमि तद्भिन्नमुदाहरेति सा ।
जनेन यूनः स्तुवता तदास्पदे,
निदर्शनं नैषधमभ्यषेचयत् ॥36॥
नलस्य पृष्टा निषधागता गुणान्,
मिषेण दूतद्विजबन्दिचारणाः ।
निपीय तत्कीर्तिकथामथानया,
चिराय तस्थे विमनायमानया ॥37॥
प्रीयं प्रियां च त्रिजगज्जयिश्रियौ,
लिखाधिलीलागृहभित्ति कावपि ।
इति स्म सा कारुतरेण लेखितं,
नलस्य च स्वस्य च सख्यमीक्षते ॥38॥
मनोरथेन स्वपतीकृतं नलं,
निशि क्व सा न स्वपती स्म पश्यति ।
अदृष्टमप्यर्थमदृष्टवैभवात्,
करोति सुप्तिर्जनदर्शनातिथिम् ॥39॥
निमीलितादक्षियुगाच्च निद्रया,
हृदोऽपि बाह्येन्द्रियमौनमुद्रितात् ।
अदर्शि संगोप्य कदाप्यवीक्षितो,
रहस्यमस्याः स महन्महीपतिः ॥40॥
अहो अहोभिर्महिमा हिमागमे,
प्यभिप्रपेदे प्रति तां स्मरार्दिताम् ।
तपर्तुपूर्तावपि मेदसां भरा,
विभावरीभिर्बिभरांबभूविरे ॥41॥
स्वकान्तिकीर्तिव्रजमौक्तिकस्रजः,
श्रयन्तमन्तर्घटनागुणश्रियम् ।
कदाचिदस्या युवधैर्यलोपिनं,
नलोऽपि लोकादश्रृणोद्गुणोत्करम् ॥42॥
तमेव लब्ध्वावसरं ततः स्मरः,
शरीरशोभाजयजातमत्सरः ।
अमोघशक्त्या निजयेन मूर्तया,
तया विनिर्जेतुमियेष नैषधम् ॥43॥
अकारि तेन श्रवणातिथिर्गुणः,
क्षमाभुजा भीमनृपात्मजालयः ।
तदुच्चधैर्यव्ययसंहितेषुणा,
स्मरेण च स्वात्मशरासनाश्रयः ॥44॥
अमुष्य धीरस्य जयाय साहसी,
तदा खलु ज्यां विशिखैः सनाथयन् ।
निमज्जयामास यशांसि संशये,
स्मरस्त्रिलोकीविजयार्जितान्ययि ॥45॥
अनेन भैमीं घटयिष्यतस्तथा,
विधेरवन्ध्येच्छतया व्यलासि तत् ।
अभेदि तत्तादृगनङ्गमार्गणै,
र्यदस्य पौष्पैरपि धैर्यकञ्चुकम् ॥46॥
किमन्यदद्यापि यदस्त्रतापितः,
पितामहो वारिजमाश्रयत्यहो ।
स्मरं तनुच्छायतया तमात्मनः,
शशाक शङ्के स न लङ्घितुं नलः ॥47॥
उरोभुवा कुम्भयुगेन जृम्भितं,
नवोपहारेण वयः कृतेन किम् ।
त्रपासरिदुर्गमपि प्रतीर्य सा,
नलस्य तन्वी हृदयं विवेश यत् ॥48॥
अपह्नुवानस्य जनाय यन्निजा,
मधीरतामस्य कृतं मनोभुवा ।
अबोधि तज्जागरदुःखसाक्षिणी,
निशा च शय्या च शशाङ्ककोमला ॥49॥
स्मरोपतप्तोऽपि भृशं न स प्रभु,
र्विदर्भराजं तनयामयाचत ।
त्यजन्त्यसून्शर्म च मानिनोवरं,
त्यजन्ति न त्वेकमयाचितव्रतम् ॥50॥
मृषाविषादाभिनयादयं क्वचि,
ज्जुगोप निःश्वासततिं वियोगजाम् ।
विलेपनस्याधिकचन्द्रभागता,
विभावनाच्चापललाप पाण्डुताम् ॥51॥
शशाक निह्नोतुमयेन तत्प्रिया,
मयं बभाषे यदलीकवीक्षिताम् ।
समाज एवालपितासु वैणिकै,
र्मुमूर्च्छ यत्पञ्चममूर्च्छनासु च ॥52॥
अवाप सापत्रपतां स भूपति,
र्जितेन्द्रियाणां धुरि कीर्तितस्थितिः ।
असंवरे शंबरवैरिविक्रमे,
क्रमेण तत्र स्फुटतामुपेयुषि ॥53॥
अलं नलं रोद्धुममी किलाभवन्
गुणा विवेकप्रमुखा न चापलम् ।
स्मरः स रत्यामनिरुद्धमेव यत्,
सृजत्ययं सर्गनिसर्ग ईदृशः ॥54॥
अनङ्गचिह्नं स विना शशाक नो,

नास्ति?

(A) बुद्धेः (B) इच्छायाः

(C) स्थिति-स्थापकसंस्कारस्य (D) धर्मस्य

49. तर्कभाषानुसारं प्रमायाः करणं किम्भवति?

(A) प्रमाता (B) प्रमेयम्

(C) तर्कः (D) इन्द्रियसंयोगादिः

50. 'व्याप्यस्य पक्षवृत्तित्वधीः' किमुच्यते?

(A) पक्षता (B) सपक्षः

(C) परामर्शः (D) व्याप्तिः

51. 'मही मित्रस्य वरुणस्य माया चन्द्रेव भानु विदधे पुरुत्रा' इति मन्त्रांशो वर्तते।

(A) उषस्सूक्ते (B) कालसूक्ते

(C) वरुणसूक्ते (D) पर्जन्यसूक्ते

52. ऋग्वेदीय-पर्जन्यसूक्तस्य कः ऋषिरस्ति ?

(A) विश्वामित्रः (B) गौतमः

(C) अत्रिः (D) कण्वः

53. यजुर्वेदीय-शिवसंकल्पमन्त्राणां का देवता?

(A) मनस् (B) शिवः

(C) संकल्पः (D) विष्णुः

54. ऋग्वेदप्रातिशासख्यानुसारं रक्त-संज्ञका के सन्ति?

(A) कण्ठ्यवर्णाः (B) अयोगवाहाः

(C) निरनुनासिकवर्णाः (D) अनुनासिकवर्णाः

55. 'तिस्र एव देवताः' इति कथनमस्ति-

(A) निरुक्ते दैवतकाण्डे

(B) ऋक्प्रातिशाख्ये

(C) निरुक्ते द्वितीयेऽध्याये

(D) अथर्ववेदे राष्ट्राभिवर्धनसूक्ते

56. जन्मादयो विकाराः ब्रह्मणः कां शक्तिमुपाश्रिताः भवन्ति?

(A) आवरणशक्तिम् (B) आध्यात्मिकीं शक्तिम्

(C) कालशक्तिम् (D) भिन्नात्मिकां शक्तिम्

57. अत्रातीतविपर्यासः केबलामनुपश्यति।
छन्दस्यश्छन्दसां योनिमात्मा छन्दोमयीं तनुम् ॥
अस्यां कारिकायाम् 'छन्दस्य' इत्यस्य शब्दस्य कोऽर्थः?

(A) वेदार्थग्रहणसमर्थः

(B) स्वतन्त्रः

(C) वैदिकछन्दसां निर्माता

(D) वैदिकछन्दसां प्रयोगे निष्णातः

58. स्फोटः भेदवान् कथं प्रतीयते?

(A) भिन्नद्रव्यानाम् अभिव्यक्तिसाधनात्

(B) भिन्नोच्चारणात्

(C) भिन्नार्थेषु प्रयोगात्

(D) नादस्य क्रमजन्मत्वात्

59. एषूदाहरणेषु वैषयिकाधारस्योदाहरणं किमस्ति?

(A) मोक्षे इच्छाऽस्ति (B) कटे आस्ते

(C) स्थाल्यां पचति (D) सर्वस्मिन्नात्मास्ति

60. पाणिनीयशिक्षानुसारम् उदात्तस्वरोच्चारणकाले हस्तः कुत्र निधेयः?

(A) हृदि (B) कर्णमूले

(C) सर्वास्ये (D) मूर्धिनि

61. व्यासभाष्यानुसारेण का उक्तिः सत्या?

(A) चित्तं हि प्रख्याप्रवृत्तिस्थितिशीलत्वात् त्रिगुणम्।

(B) चित्तवृत्तीनां निरोधः असाध्यः।

(C) सर्ववृत्तिनिरोधे सम्प्रज्ञातः समाधिः।

(D) चित्तवृत्तिबोधे पुरुषस्य अनादिः सम्बन्धः न हेतुः ।

62. ब्रह्मसूत्रस्य रचयिता कोऽस्ति?

(A) शङ्कराचार्यः (B) बादरायणः

(C) कपिलः (D) सदानन्दः

63. शब्दप्रमाणस्य फलं किम्भवति?

(A) पदज्ञानम् (B) वाक्यार्थज्ञानम्

(C) शक्तिज्ञानम् (D) पदजन्यपदार्थस्मरणम्

64. न्यायसिद्धान्तमुक्तावल्यां साध्यशून्यो यत्र पक्षस्त्वसौ के उदाहृतः?

(A) विरुद्धः (B) बाधः

(C) अनैकान्तिकः (D) सत्प्रतिपक्षः

65. बौद्धदर्शने भावनाचतुष्टये किं नोपदिष्टम् ?

(A) सर्वं क्षणिकं क्षणिकम्

(B) स्वलक्षणम् स्वलक्षणम्

(C) सामान्यम् सामान्यम्

(D) शून्यं शून्यम्

66. 'शयिता सविधे ऽप्यनीश्वरा सफली कर्त्तुमहो मनोरथान्।-
पण्डितराजजगन्नाथेन कस्य काव्यस्य उदाहरणरूपे उद्धृतोऽयं श्लोकः?

(A) अधमस्य (B) उत्तमोत्तमस्य

(C) उत्तमस्य (D)

67. 'उपकारकत्वादलङ्कारः सप्तममङ्गम् इति यायावरीयः।' उक्तिरियं कुत्रास्ति?

(A) नाट्यशास्त्रे (B) काव्यप्रकाशे

(C) काव्यमीमांसायाम् (D) वक्रोक्तिजीविते

68. वक्रोक्तिजीवितानुसारं कविव्यापारवक्रत्वप्रकाराः कति सम्भवन्ति?

(A) त्रयः (B) चत्वारः

(C) पञ्च (D) षट्

69. काव्यप्रकाशानुसारं शृङ्गारे द्रुतिकारणम् आह्लादकत्वं कस्य?

(A) माधुर्यस्य (B) ओजसः

(C) प्रसादस्य (D) समतायाः

70. पण्डितराजजगन्नाथमते काव्यस्य कति भेदाः स्वीकृताः?
(A) त्रयः (B) द्वौ
(C) चत्वारः (D) पञ्च

71. ब्राह्मीलिपेः उद्वाचने प्रथमां सफलतां कः प्राप्तवान्?
(A) मैक्समूलरः (B) विलियम-जोन्सः
(C) जेम्स प्रिंसेपः (D) व्हिटने

72. अशोकस्य शिलालेखानां भाषा का अस्ति?
(A) प्राकृतम् (B) संस्कृतम्
(C) अपभ्रंशः (D) अवेस्ता

73. कुत्र अशोकस्य नाम प्रदत्तम् ?
(A) मास्कि-शिलालेखे
(B) प्रयाग-स्तम्भ-लेखे
(C) गिरनार-शिलालेखे
(D) गन्धार-द्विभाषी-शिलालेखे

74. गिरनारस्य तडागेन सम्बद्धो नासीत् ।
(A) चन्द्रगुप्तः मौर्यः (B) अशोकः मौर्यः
(C) कनिष्कः कुषाणः (D) रुद्रदामा शकः

75. अत्र वर्तते कालिदासस्य नामोल्लेखः।
(A) तन्तुवाय-श्रेण्याः मन्दसौर-शिलालेखे
(B) प्रभावतीगुप्तायाः पूना-ताम्रपट्ट-लेखे
(C) पुलिकेशिद्वितीयस्य एहोले-शिलालेखे
(D) मिहिरभोजस्य ग्वालियार-शिलालेखे

## नेट द्वितीय प्रश्नपत्र जनवरी-2017

1. अधस्तनेषु उचितसम्बन्धयुतं विकल्पं चिनुत -
(A) द्यावाचिदस्मै पृथिवी नमेते... – अग्निदेवता
(B) यस्य ब्रह्मवर्धनं यस्य सोमः – सोमसूक्तम्
(C) राजन्तमध्वराणां गोपामृतस्य दीदिविम्.... – रुद्रदेवता
(D) ता वां वास्तून्युश्मसि गमध्यै यत्र-
गावो भूरिशृङ्गा अयासः..... - विष्णुसूक्तम्

2. अधस्तनयुग्मानां समुचितां तालिकां चिनुत-

| | |
|---|---|
| (क) पुराणी देवि युवतिः पुरन्धिरनु-व्रतं चरसि विश्ववारे | (i) इन्द्रसूक्तम् |
| (ख) से नः पितेव सूनवेऽग्ने सूपायनों भव- | (ii) विष्णुसूक्तम् |
| (ग) यः पृथिवीं व्यथमानामदृंहदयः-पर्वतान्प्रकुपिताँ अरम्णात्... | (iii) उषस्सूक्तम् |
| (घ) तदस्य प्रियमभिपाथो अश्यां-नरो यत्र देवयवो मरदन्ति..... | (iv) अग्निसूक्तम् |

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| (A) | (iii) | (iv) | (i) | (ii) |
| (B) | (iii) | (iv) | (ii) | (i) |
| (C) | (ii) | (iii) | (i) | (iv) |
| (D) | (ii) | (iv) | (i) | (iii) |

3. "नाहं वेद भ्रातृत्वं नो स्वसृत्वमिन्द्रो विदुरङ्गिरसश्च घोराः" इति मन्त्रांशो वर्तते-
(A) विश्वामित्र-नदीसूक्ते (B) सरमा-पणिसूक्ते
(C) यम-यमीसूक्ते (D) पुरुरवा-उर्वशीसूकते

4. "को दम्पती समनसा वि यूयोदध यदग्निः श्वशुरेषु दीदयत्" इति मन्त्रांशो वर्तते-
(A) सरमा - पणिसूक्ते
(B) विश्वामित्र – नदीसूक्ते
(C) पुरुरवा – उर्वशीसूक्ते
(D) यम - यमी

5. अधस्तनेषु सामवेदस्य ब्राह्मणमस्ति-
(A) शांखायनब्राह्मणम्
(B) कौषीतकिब्राह्मणम्
(C) षड्विंशब्राह्मणम्
(D) तैत्तिरीयब्राह्मणम्

6. "अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते / ततो भूय इव ते तमो ये उ विद्यायां रताः" सन्दर्भोऽयं वर्तते-
(A) कठोपनिषदि (B) ईशोपनिषदि
(C) श्वेताश्वतरोपनिषदि (D) बृहदारण्यकोपनिषदि

7. "सृष्ट्युत्पत्तिकाल एव वेदानामुत्पत्तिकालः" इति कः स्वीकरोति?
(A) मेक्डानलः (B) मैक्षमूलरः
(C) एम0 विन्टरनिट्जः (D) महर्षिदयानन्दः

8. अधस्तनयुग्मानां समुचितां तालिकां चिनुत-

| | |
|---|---|
| (क) कात्यायनशुल्बसूत्रम् | (i) व्याकरणम् |
| (ख) त्रिमुनि | (ii) कृष्णयजुर्वेदः |
| (ग) ऋक्तन्त्रप्रातिशाख्यम् | (iii) शुक्लयजुर्वेदः |
| (घ) आपस्तम्बगृह्यसूत्रम् | (iv) सामवेदः |

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| (A) | (i) | (iv) | (ii) | (iii) |
| (B | (iii) | (i) | (iv) | (ii) |
| (C) | (iii) | (ii) | (i) | (iv) |
| (D) | (ii) | (iv) | (i) | (iii) |

9. वेदानां विकृतिपाठः कतिविधः?
(A) त्रिविधः (B) पञ्चविधः
(C) अष्टविधः (D) नवविधः

10. द्विविधो विभाजनक्रमो वर्तते-
(A) अथर्ववेदस्य (B) ऋग्वेदस्य
(C) ईशोपनिषदः (D) कठोपनिषदः

11. शुक्लयजुर्वेदस्य कति शाखाः समुपलभ्यन्ते?

(A) 4 (B) 3
(C) 5 (D) 2

12. अधस्तनयुग्मानां समुचितां तालिकां चिनुत-

(क) पिङ्गलः (i) ज्योतिषम्
(ख) शुल्बसूत्राणि (ii) निरुक्तम्
(ग) लगधः (ii) छन्दःशास्त्रम्
(घ) तदिदं विद्यास्थानं- व्याकरणस्य कात्स्न्र्यं स्वार्थसाधकं च । (iv) कल्पः

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| (A) | (i) | (iv) | (ii) | (iii) |
| (B) | (ii) | (iv) | (i) | (iii) |
| (C) | (iii) | (ii) | (i) | (iv) |
| (D) | (iii) | (iv) | (i) | (ii) |

13. महत् किमस्ति?
(A) प्रकृतिः (B) विकृतिः
(C) प्रकृतिविकृती (D) न प्रकृतिः न विकृतिः

14. 'तल्लिङ्गलिङ्गिपूर्वकम्' लक्षणमिदं कस्य विद्यते ?
(A) शब्दप्रमाणस्य (B) अनुमानप्रमाणस्य
(C) प्रत्यक्षप्रमाणस्य (D) उपमानप्रमाणस्य

15. व्यक्तं कीदृग् न भवति?
(A) हेतुमत् (B) अव्यापि
(C) अनाश्रितम् (D) सावयवम्

16. "तदैक्यप्रमेयस्य तत्प्रतिपादकोपनिषत्प्रमाणस्य च बोध्यबोधकभावः" वेदान्तसारानुसारं लक्षणमिदं कस्यास्ति?
(A) अधिकारिणः (B) विषयस्य
(C) सम्बन्धस्य (D) प्रयोजनस्य

17. 'समष्टिव्याष्ट्यभिप्रायेणैकमनेकमिति' उक्तिरियं वेदान्तसारे कस्य सन्दर्भेऽस्ति?
(A) विद्यायाः (B) अज्ञानस्
(C) अध्यारोपस्य (D) समाधेः

18. अज्ञानोपहितं चैतन्यं कीदृशं कारणं भवति?
(A) निमित्तकारणम्
(B) उपादानकारणम्
(C) निमित्तकारणम् उपादानकारणं च
(D) कीदृशमपि कारणं न

19. वेदान्तसारानुसारं सूक्ष्मशरीराणि कति अवयवानि भवन्ति?
(A) षोडशायवानि (B) पञ्चदशावयवानि
(C) सप्तदशावयवानि (D) त्रयोदशावयवानि

20. तर्कसङ्ग्रहानुसारं रूपं कतिविधम्?
(A) पञ्चविधम् (B) सप्तविधम्
(C) षड्विधम् (D) नवविधम्

21. 'गौरश्वः पुरुषो हस्ती' इत्यादिपदसमुदायः प्रमाणं कथं न भवति?
(A) योग्यताविरहात् (B) आकाङ्क्षाविरहात्
(C) सान्निध्याभावात् (D) पदसमूहाभावात्

22. असाधारणधर्मः कस्य लक्षणम्?
(A) लक्षणस्य (B) उद्देशस्य
(C) परीक्षायाः (D) आत्मनः

23. तर्कभाषायां प्रकरणसम' हेत्वाभासस्य काऽपरा सञ्ज्ञा?
(A) बाधितविषयः (B) सत्प्रतिपक्षः
(C) सव्यभिचारः (D) अनुपसंहारी

24. तर्कभाषानुसारं समवायिकारणं किम्भवति?
(A) गुणः (B) द्रव्यम्
(C) कर्म (D) सामान्यम्

25. 'पठति' इति क्रियापदं कीदृश्याः भाषायाः उदाहरणमस्ति
(A) अयोगात्मिकायाः (B) प्रश्लिष्टयोगात्मिकायाः
(C) श्लिष्टयोगात्मिकायाः (D) अश्लिष्टयोगात्मिकायाः

26. ग्रीकभाषा कस्य परिवारस्य भाषा अस्ति?
(A) भारोपीय-परिवारस्य (B) सेमेटिक-परिवारस्य
(C) सूडानी-परिवारस्य (D) काकेशी-परिवारस्य

27. निम्नलिखितासु भाषासु का भाषा 'सतम्' वर्गस्य नास्ति
(A) संस्कृतभाषा (C) ग्रीकभाषा
(B) ईरानीभाषा (D) फारसीभाषा

28. अंग्रेजी-भाषायाः सम्बन्धः कया भाषाशाखया अस्ति
(A) केल्टिकशाखयाः (B) जर्मनिकशाखयाः
(C) इटैलिकशाखयाः (D) ग्रीकशाखयाः

29. संस्कृतभाषायां निम्नलिखितेषु स्वरेषु कस्य स्वरस्व दीर्घो नास्ति?
(A) ऋकारस्य (B) अकारस्य
(C) इकारस्य (D) ऌकारस्य

30. अन्त्यादलः पूर्ववर्णस्य का सञ्ज्ञा भवति?
(A) अपृक्तसञ्ज्ञा (B) उपधा-सञ्ज्ञा
(C) टि-सञ्ज्ञा (D) सर्वनामस्थानसञ्ज्ञा

31. निषेध-विकल्पयोः सञ्ज्ञा का?
(A) अपृक्तसञ्ज्ञा (B) विभाषासञ्ज्ञा
(C) उपधासञ्ज्ञा (D) प्रगृह्यसञ्ज्ञा

32. 'सुडनपुंसकस्य' इति सूत्रेण का सञ्ज्ञा क्रियते?
(A) सर्वनामस्थानसंज्ञा (B) निष्ठासञ्ज्ञा
(C) प्रातिपदिकसंज्ञा (D) पदसञ्ज्ञा

33. 'अनुविष्णु' इत्यत्र 'अव्ययं विभक्ति-समीप-समृद्धि इत्यादिसूत्रेण कस्मिन् अर्थेऽव्ययीभावसमासः ?
(A) समीपार्थे (B) असम्प्रत्यर्थे
(C) पश्चादर्थे (D) आनुपूर्व्यर्थे

34. 'व्यूढोरस्कः' इत्यत्र कीदृशः समासः?
(A) अव्ययीभावः (B) तत्पुरुषः
(C) द्वन्द्वः (D) बहुव्रीहिः

35. 'सार्पिषोऽपि स्याद्' इत्यत्र 'आणि' शब्दस्या कर्मप्रवचनीयसञ्ज्ञा कस्मिन् अर्थे भवति?
(A) सम्भावनाद्योतकतायाम्
(B) अन्ववसर्गद्योतकतायाम्
(C) समुच्चयद्योतकतायाम्
(D) पदार्थद्योतकतायाम्

36. अधिकरणवाचिनश्च' इति सूत्रस्योदाहरणं किं भवति ?
(A) राज्ञां मतः
(B) द्विरह्नो भोजनम्
(C) शब्दानामनुशासनमाचार्यस्य वा
(D) इदम् एषाम् आसितम्

37. अधस्तनयुग्मानां समीचीनां तालिकां चिनुत-
(क) भासः (i) मालतीमाधवम्
(ख) कालिदासः (ii) मृच्छकटिकम्
(ग) भवभूतिः (iii) मालविकाग्निमित्रम्
(घ) शूद्रकः (iv) पञ्चरात्रम्

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| (A) | (iv) | (iii) | (i) | (ii) |
| (B) | (iii) | (iv) | (ii) | (i) |
| (C) | (ii) | (iii) | (i) | (iv) |
| (D) | (ii) | (iv) | (i) | (iii) |

38. शिशुपालवधमहाकाव्यस्य प्रथमसर्गस्य नाम भवति-
(A) श्रीकृष्णगुणकीर्तनम् (B) नारदगुणकीर्तनम्
(C) कृष्णनारदसम्भाषणम् (D) नारदावतरणम्

39. सानुमत्याः उपाख्यानम् अभिज्ञानशाकुन्तले कस्मिन् अङ्के अस्ति?
(A) सप्तमे (B) षष्ठे
(C) पञ्चमे (D) चतुर्थे

40. आसु कस्याः उल्लेखो मेघदूते नास्ति-
(A) रेवायाः (B) शिप्रायाः
(C) तुङ्गभद्रायाः (D) गन्धवत्याः

41. मृच्छकटिकम् इति कस्य रूपकस्य उदाहरणं भवति ?
(A) नाटकस्य (B) प्रकरणस्य
(C) व्यायोगस्य (D) समवकारस्य

42. कृतककोपवृत्तान्तः मुद्राराक्षसे कस्मिन्नङ्केऽस्ति?
(A) प्रथमे (B) द्वितीये
(C) तृतीये (D) चतुर्थे

43. कालानुसारेण तालिकां चिनुत-
(अ) भारविः
(ब) भासः
(स) कालिदासः
(द) साहित्यदर्पणकारः विश्वनाथः

| | | | | |
|---|---|---|---|---|
| (A) | (अ) | (ब) | (स) | (द) |
| (B) | (ब) | (अ) | (स) | (द) |
| (C) | (स) | (अ) | (ब) | (द) |
| (D) | (ब) | (स) | (अ) | (द) |

44. विश्वनाथमते हास्यं कतिविधं भवति?
(A) चतुर्विधम् (B) पञ्चविधम्
(C) षड्विधम् (D) द्विविधम्

45. काव्यलक्षणविचारे"स्ववचनविरोधाद् अपास्तम्" इति कथनेन कस्य मतं विश्वनाथेन निराकृतम् ।
(A) आनन्दवर्धनस्य (B) वामनस्य
(C) मम्मटस्य (D) व्यक्तिविवेककारस्य

46. साहित्यदर्पणमते नीलवर्णः महाकालदैवतः रसः कः भवति?
(A) रौद्रः (B) वीरः
(C) भयानकः (D) बीभत्सः

47. जतुकर्णीपुत्रः भवति-
(A) भवभूतिः (B) कालिदासः
(C) माघः (D) श्रीहर्षः

48. शाकुन्तले दुष्यन्तपुत्रस्य प्रथमं नाम किम् आसीत् ?
(A) भरतः (B) सर्वदमनः
(C) गौतमः (D) वातायनः

49. साहित्यदर्पणानुसारेण एषु कस्य रूपकमध्ये गणनं न भवति –
(A) समेवकारस्य (B) नाटिकायाः
(C) प्रकरणस्य (D) प्रहसनस्य

50. एषु गतिसञ्ज्ञाविधायकं सूत्रं किमस्ति?
(A) ऊर्यादिच्विडाचश्च
(B) कुगतिप्रादयः
(C) तत्रोपपदं सप्तमीस्थम्
(D) एकविभक्ति चापूर्वनिपाते

## नेट तृतीय प्रश्नपत्र जनवरी-2017

1. निरुक्तानुसारेण 'अति' इत्यस्व उपसर्गस्य कोऽर्थः ?
(A) निषेधः (B) एकीभावः
(C) पूजा (D) अनादरः

2. निरुक्तानुसारेण "चित्"इत्यस्य निपातस्य अर्थो नास्ति-
(A) प्रतिषेधः (B) उपमा
(C) पूजा (D) अवकुत्सितः

3. निरुक्ते अधोलिखितेषु उपधाविकारस्य उदाहरणमस्ति-
(A) प्रत्तम् (B) स्तः

(C) गत्वा (D) राजा

4. ब्राह्मणग्रन्थानां विषयो नास्ति-

(A) छन्दोविवेचनम् (B) पुराकल्पः

(C) विधिः (D) निर्वचनम्

5. शिक्षावेदाङ्गे गणना नास्ति-

(A) तैत्तिरीयप्रातिशाख्यस्य (B) ऋक्तन्वस्य

(C) पारस्करगृह्यसूत्रस्य (D) नारदशिक्षायाः

6. ऐतरेयब्राह्मणस्य शुनःशेषाख्याने शुनःशेषस्य पितुर्नाम अस्ति-

(A) वाजश्रवाः (B) अजीगर्तः

(C) कण्वः (D) सौयवसी

7. 'वाङ्मनस्' इत्याख्यानं वर्तते -

(A) कौषीतकिब्राह्मणे (B) ऐतरेयब्राह्मणे

(C) षड्विंशब्राह्मणे (D) शतपथब्राह्मणे

8. "यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्" कठोपनिषदि इदं कथनम् अस्ति-

(A) कण्वस्य (B) यमस्य

(C) नचिकेतसः (D) इन्द्रस्य

9. "तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनम्" इत्युद्धरणं वर्तते-

(A) तैत्तिरीयोपनिषदि (B) कठोपनिषदि

(C) केनोपनिषदि (D) वृहदारण्यकोपनिषदि

10. अधस्तनेषु स्वरितस्वरस्य भेदोऽस्ति -

(A) क्षैप्रः (B) सन्नतरः

(C) निघातः (D) सन्नतमः

11. ऋग्वेदीयशाकलसंहितायां उदात्तस्वरः केन प्रकारेण प्रदर्श्यते?

(A) अं: (B) $अ^1$

(C) $अ^3$ (D) अ [अचिह्नितम्]

12. ऋग्वेदप्रातिशाख्यानुसारेण रक्तसंज्ञका वर्णा भवन्ति-

(A) अनुनासिकव्णाः (B) सोष्मवर्णाः

(C) अघोषवर्णाः (D) समानाक्षरवर्णाः

13. ऋग्वेदप्रातिशाख्यानुसारेण अधस्तनयुग्मानां समुचितां तालिकां चिनुत-

(अ) ऊ (i) अघोषः

(ब) क (ii) सन्ध्यक्षरम्

(स) घ (iii) समानाक्षरम्

(द) ए (iv) सोष्म

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| (A) | (i) | (iv) | (iii) | (ii) |
| (B) | (ii) | (iv) | (iii) | (i) |
| (C) | (iii) | (i) | (iv) | (ii) |
| (D) | (ii) | (iv) | (i) | (iii) |

14. सर्वादौ बेदस्य अग्रेजीभाषायाम् अनुवादः केन कृतः?

(A) वेबरेण (B) विल्सनेन

(C) ब्लूमफिल्डेन (D) ओल्डनबर्गेण

15. माध्यन्दिनसंहितायाः हिन्दीभाषायाम् अनुवादः सर्वादौ केन कृतः?

(A) अरविन्देन

(B) महर्षिदयानन्देन

(C) श्रीपाददामोदरसातवलेकरेण

(D) स्वामी-विवेकानन्देन

16. अधोनिर्दिष्टेषु' मनोः स्त्री' इति विग्रहे स्त्रीलिङ्गे अशुद्धः प्रयोगः कः?

(A) मनायी B) मनावी

(C) मन्वी (D) मनुः

17. 'अध्यापयति बवेदम्' इत्यत्र क्रियापदे परस्मैपदविधायको नियमः कः?

(A) अणावकर्मकाच्चित्तवतकर्तृकात्

(B) विभाषाऽकर्मकात्

(C) निगरणचलनार्थेभ्यश्च

(D) बुध-युध-नश-जनेङ्-प्रु-द्रु-स्रुभ्यो णेः

18. 'बच्' धातोरशब्दसञ्ज्ञायां ण्यत्प्रत्ययान्तं किं रूपम्?

(A) वाच्यम् (B) वाक्यम्

(C) वच्यम् (D) उच्यम्

19. 'एध' धातोः आशीर्लिडि उत्तमपुरुषैकवचने किं रूपम्?

(A) एधेय (B) एधिषीय

(C) एधिताहे (D) ऐधिषि.

20. क्रियामात्रविषयं व्यापारनियतश्च किम्भवति ?

(A) हेतुः (B) करणम्

(C) अधिकरणम् (D) सम्बन्धः

21. 'लोमन्' शब्दस्य मत्वर्थीयः शुद्धप्रयोगः कः ?

(A) लोमनः (B) लोमिकः

(C) लोमिलः (D) लोमशः

22. 'शास्त्रपूर्वके प्रयोगेऽभ्युदयः महाभाष्यानुसारं रिक्तस्थानं पूरयत।

(A) कूपखननन्यायेन (B) तत्तुल्यं वेदशब्देन

(C) स्नातानुलिपाप्रकारेण (D) पांसूदकन्यायेन

23. एषु पाठकगुणेषु कः गण्यते?

(A) अक्षरव्यक्तिः (B) गीती

(C) लिखितपाठकः (D) शीघ्री

24. निम्नलिखितेषु अन्तःस्थेषु को ध्वनिः न गण्यते?

(A) ट (B) र्

(C) ल् (D) य्

25. निम्मलिखितेषु विषमीकरणस्य उदाहरणं किम् अस्ति?

(A) बभूव (B) ससार

(C) गमिष्यति (D) पपाठ

26. चीनी भाषा कीदृशी भवति?
(A) योगात्मिका (B) अयोगात्मिका
(C) प्रश्लिष्टयोगात्मिका (D) श्लिष्टयोगात्मिका

27. अर्थसङ्ग्रहे 'वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः ' इति धर्मलक्षणे 'वेदप्रतिपाद्यः' इति पदं किमर्थं गृहीतम् ?
(A) द्यूतक्रीडादावतिव्याप्तिवारणाय
(B) स्वर्गादिप्रयोजनेऽतिव्याप्तिवारणाय
(C) श्येनयागादावतिव्याप्तिवारणाय
(D) भोजनादावतिव्याप्तिवारणाय

28. शाब्दीभावनायाः साध्यं किम्भवति?
(A) लिङ्गादिज्ञानम् (B) अर्थवादज्ञाप्यप्राशस्त्यम्
(C) स्वर्गादिफलम् (D) आर्थीभावना

29. तर्कसङ्ग्रहदीपिकादिशा एषु गोर्लक्षणेषु कस्मिन् अतिव्याप्तिदोषः सङ्घटते?
(A) श्रृङ्गित्वम् (B) एकशफत्वम्
(C) कपिलत्वम् (D) सास्नादिमत्त्वम्

30. 'तन्तुसंयोगः पटस्य' कीदृशं कारणम्?
(A) असमवायिकारणम्
(C) समवाय्यसमवायिकारणम्
(B) समवायिकारणम्
(D) निमित्तकारणम्

31. न्यायसिद्धान्तदृशा व्याप्तिः का?
(A) साध्यवदन्यस्मिन्नसम्बन्धः
(B) व्याप्यस्य पक्षवृत्तित्वधीः
(C) सिषाधयिषाविरहसहकृतसिद्ध्यभावः
(D) साध्यवत्त्वेन पक्षस्य पचनम्

32. योगसूत्रभाष्ये निर्बीजः समाधिः क उक्तः?
(A) सम्प्रज्ञातसमाधिः
(B) असम्प्रज्ञातसमाधिः
(C) सवितर्कसमाधिः
(D) सविचारसमाधिः

33. 'तस्मिन् परमगुरौ सर्वकर्मार्पणम्' इति व्यासभाष्येण किं-लक्षितम्?
(A) सन्तोषः (B) तपः
(C) स्वाध्यायः (D) ईश्वरप्रणिधानम्

34. वाक्यपदीयानुसारं ' स्फोटनादयोः'सम्बन्धः कीदृशो भवति?
(A) तरङ्गप्रतिबिम्बवत् (B) कार्यकारणवत्
(C) जन्यजनकवत् (D) धूमाग्निवत्

35. वाक्यपदीयानुसारं स्फोटः कीदृशो भवति ?
(A) सक्रमः (B) भेदवान्
(C) अक्रमः (D) वर्णानुपूर्वी

36. 'आनन्दमयोऽभ्यासात्' इत्यस्मिन् सूत्रे 'मयट्' प्रत्ययः कस्मिन्नर्थे वर्तते?
(A) विकारार्थे (B) जनकार्थे
(C) कारणार्थे (D) प्राचुर्यार्थे

37. 'शास्त्रयोनित्वात्' इत्यस्मिन् सूत्रे 'योनिः' इत्यस्य शब्दस्य कोऽर्थः?
(A) जन्म (B) कारणम्
(C) कार्यम् (D) व्याख्या

38. हेमचन्द्रसूरिः कस्य दर्शनस्य आचार्योऽस्ति?
(A) बौद्धदर्शनस्य (B) जैनदर्शनस्य
(C) चार्वाकदर्शनस्य (D) सांख्यदर्शनस्य

39. सांख्यकारिकानुसारं किं तत्त्वं प्रधानपुरुषयोः अन्तरं विशिनष्टि?
(A) मनः (B) बुद्धिः
(C) अहङ्कारः (D) ज्ञः

40. सांख्यकारिकानुसारं करणं कतिविधम्
(A) षोडश (B) चतुर्दश
(C) सप्तदश (D) त्रयोदश

41. 'तज्ज्ञानं पञ्चविधं मतिश्रुतावधिमनः पर्यायकेवलभेदेन' उक्तिरियं केन दर्शनेन सम्बद्धा अस्ति?
(A) आर्हतदर्शनेन (B) बौद्धदर्शनेन
(C) रामानुजदर्शनेन (D) न्यायदर्शनेन

42. वेदान्तसारानुसारं निर्विकल्पकस्य समाधेः कति विघ्नाः भवन्ति?
(A) त्रयः (B) पञ्च
(C) चत्वारः (D) षट्

43. रुद्रदाम्नः शिलालेखः कुत्र विद्यते?
(A) प्रयागे (B) जूनागढे
(C) तक्षशिलायाम् (D) पाटलिपुत्रे

44. इलाहाबादशिलालेखे अस्य नाम नास्ति-
(A) रुद्रदेवः (B) शशाङ्कः
(C) चन्द्रवर्मा (D) नागदत्तः

45. खरोष्ठ्यां लिप्यां कस्य अभिलेखाः उपलभ्यन्ते ?
(A) अशोकस्य (B) समुद्रगुप्तस्य
(C) कनिष्कस्य (D) खारवेलस्य

46. अधस्तनयुग्मानां समीचीनां तालिकां चिनुत-
(क) लोके हि लोहेभ्यः कठिनतराः खलु स्नेहमया बन्धनपाशाः — (i) रत्नावली
(ख) वरं विरोधोऽपि समं महात्मभिः — (ii) हर्षचरितम्
(ग) श्रीहर्षो निपुणः कविः- परिषदप्येषा गुणग्राहिणी — (ii) मुद्राराक्षसम्
(घ) गजेन्द्राश्च नरेन्द्राश्च प्रायः सीदन्ति दुःखिताः — (iv) किरातार्जुनीयम्

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| (A) | (i) | (iv) | (i) | (ii) |

(B) (ii) (iv) (i) (iii)

(C) (ii) (iii) (i) (iv)

(D) (ii) (iv) (i) (iii)

47. एषु किं रामायणाश्रितं भवति-

(A) नैषधीयचरितम् (B) किरातार्जुनीयम्

(C) शिशुपालवधम् (D) रघुवंशम्

48. एषु किं पर्व महाभारते नास्ति-

(A) द्रोणपर्व (B) भीष्मपर्व

(D) शल्यपर्व (C) युधिष्ठिरपर्व

49. महाभारताश्रितं न भवति-

(A) वेणीसंहारम् (B) दूतवाक्यम्

(C) मध्यमव्यायोगः (D) अभिषेकनाटकम्

50. 'ज्ञानविज्ञानयोगः ' श्रीमद्भगवद्गीतायाः कतमोऽध्यायः-

(A) द्वितीयोऽध्यायः (B) तृतीयोऽध्यायः

(C) पञ्चमोऽध्यायः (D) सप्तमोऽध्यायः

51. एषु कस्य महापुराणेषु अन्तर्भावो नास्ति-

(A) मत्स्यपुराणस्य (B) ब्रह्मपुराणस्य

(C) अग्निपुराणस्य (D) साम्बपुराणस्य

52. 'फलेन मूलेन च वारिभूरुहां मुनेरिवेत्थं मम यस्या वृत्तयः' – नैषधीयचरिते इयमुक्तिर्भवति-

(A) नलस्य (B) दमयन्त्याः

(C) हंसपत्न्याः (D) हंसस्य

53. 'परिषु सोऽहं बहुलीभवन्तमपां तरङ्गेष्विव तैलबिन्दुम्।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः॥'
रघुवंशे कस्येयमुक्तिः?

(A) लक्ष्मणस्य (B) रामस्य

(C) भरतस्य (D) शत्रुघ्नस्य

54. "गतं तिरश्चीनमनूरूसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः।"
शिशुपालवधे अस्मिन् पद्यांशे 'अनूरूसारथिः' भवति-

(A) अग्निः (B) सूर्यः

(C) चन्द्रः (D) विद्युत्

55. "ईदृशानां विपाकोऽपि जायते परमाद्भुतः " उत्तररामचरिते इयमुक्तिर्भवति-

(A) सीतायाः (B) मुरलायाः

(C) तमसायाः (D) लक्ष्मणस्य

56. मुद्राराक्षसे कौमुदीमहोत्सवः केन निषिद्धः ?

(A) राक्षसेन (B) चन्द्रगुप्तेन

(C) चाणक्येन (D) मलयकेतुना

57."स्त्रीणामशिक्षितपटुत्वममानुषीषु संदृश्यते किमुत याः प्रतिबोधवत्यः॥" अभिज्ञानशाकुन्तले इयमुक्तिः कस्य?

(A) शार्ङ्गरवस्य (B) शारद्वतस्य

(C) दुष्यन्तस्य (D) सोमरातस्य

58. हर्षचरिते पञ्चमे उच्छ्वासे - 'विश्वस्तानां यशसा स्थातुमिच्छामि लोके न बपुषा' - इत्युक्तिर्भवति-

(A) हर्षवर्धनस्य (B) प्रभाकरवर्धनस्य

(C) यशोमत्याः (D) कुरङ्गकस्य

59. "सूरिभिः कथितः' इति विद्वदुपज्ञेयमुक्तिः।" – अत्र विषये के तावत् आनन्दवर्धनमते प्रथमे विद्वांसः ?

(A) मीमांसकाः (B) तार्किकाः

(C) कवयः (D) वैयाकरणाः

60. "क्रियायाः प्रतिषेधेऽपि फलव्यक्ति.. काव्यप्रकाशानुसारेण कस्यालङ्कारस्य लक्षणमिदम्-

(A) उपमालङ्कारस्य (B) निदर्शनालङ्कारस्य

(C) विभावनालङ्कारस्य (D) उत्प्रेक्षालङ्कारस्य

61. 'ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया॥"
काव्यप्रकाशे प्रथमोल्लासे श्लोकोऽयं कस्य काव्य- भेदस्य उदाहरणरूपेण उल्लिखितः?

(A) ध्वनिकाव्यस्य

(B) गुणीभूतव्यङ्ग्यकाव्यस्य

(C) शब्दचित्रकाव्यस्य

(D) वाच्यचित्रकाव्यस्य

62. दशरूपकानुसारेण - ( साहित्यदर्पणानुसारेण)
'अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति। फलावसानं यच्चैव .' तत् किम् अभिधीयते?

(A) बीजम् (B) बिन्दुः

(C) पताका (D) प्रकरी

63. दशरूपकमतानुसारं दृष्टनष्टस्य बीजस्य अन्वेषणं भवति-

(A) मुखसन्धिः (B) गर्भसन्धिः

(C) प्रतिमुखसन्धिः (D) निर्वहणसन्धिः

64. आसु कस्याः बक्रतामध्ये गणनं नास्ति?

(A) वर्णविन्यासवक्रतायाः (B)समासवक्रतायाः

(C) पदपूर्वार्द्धवक्रतायाः (D) प्रकरणवक्रतायाः

65. राजशेखरेण काव्यमीमांसायां दोषाधिकरण-विषये कस्य ग्रन्थकारस्य नाम उल्लिखितम्?

(A) सुवर्णनाभस्य (B) शेषस्य

(C) धिषणस्य (D) भरतस्य

66. "दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम्।
लोके नाट्यमेतद्भविष्यति॥" नाट्यशास्त्रतः रिक्तस्थानं पूरयत-

(A) मोक्षप्रदायकम् (B)ज्ञानप्रदायकम्

(C) आह्लादजननम् (D) विश्रामजननम्

67. "मित्रात्रिपुत्रनेत्राय त्रवीशात्रवशत्रवे।
गोत्रारिगोत्रजत्राय गोत्रात्रे ते नमो नमः ॥" रसगङ्गाधरे प्रथमे आनने श्लोकोऽयम् उदाहरणं भवति-

(A) उत्तमकाव्यस्य (B) अधमकाव्यस्य
(C) उत्तमोत्तमकाव्यस्य (D) मध्यमकाव्यस्य

68. "यत्र व्यङ्ग्यमप्रधानमेव सच्चमत्कारकारणम्" जगन्नाथमते तत् भवति-
(A) मध्यमकाव्यम (B) उत्तमोत्तमकाव्यम्
(C) उत्तमकाव्यम् (D) अधमकाव्यम्

69. कौटिल्यार्थशास्त्रोल्लेखानुसारं एषु कः कोपात् विननाश इति उल्लिखितः?
(A) अजबिन्दुः (B) रावणः
(C) करालः (D) जनमेजयः

70. कौटिलीयार्थशास्त्रे सर्वविद्यानां प्रदीपः, सर्वकर्मणाम् उपायः सर्वधर्माणां च आश्रयः का विद्या प्रोक्ता?
(A) आन्वीक्षिकी (B) वयी
(C) वार्ता (D) दण्डनीतिः

71. कौटिलीयार्थशास्त्रे एतत् वैश्यस्य स्वधर्मो न भवति-
(A) याजनम् (B) दानम्
(C) अध्ययनम् (D) यजनम्

72. याज्ञवल्क्यमते गृहीतवेतनः कर्म त्यजन्-
(A) चतुर्गुणमावहेत् (B) त्रिगुणमावहेत्
(C) पञ्चगुणमावहेत् (D) द्विगुणमावहेत्

73. स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः। अर्थशास्त्रात्तु बलवद् -याज्ञवल्क्यसंहितातः रिक्तं स्थानं पूरवत।
(A) राजादेशः (B) धर्मशास्त्रम्
(C) नृपस्येच्छा (D) नीतिशास्त्रम्

74. मनुसंहितानुसारं एषु कस्य क्रोधजव्यसने गणनं न भवति इति स्थितिः ।
(A) दिवास्वप्रस्य (B) वाक्पारुष्यस्य
(C) साहसस्य (D) दण्डपारुष्यस्य

75. मनुसंहितातः रिक्तं स्थानं पूरयत- वेदः स्मृतिः . एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्। स्वस्य च प्रियमात्मनः।
(A) उपकारः (B) अपकारः
(C) सदाचारः (D) परम्परा

## नेट द्वितीय प्रश्नपत्र नवम्बर-2017

1. ऋग्वेदे प्रथमसूक्तस्य द्रष्टा कः?
(A) कण्वः (B) विश्वामित्रः
(C) मधुच्छन्दाः (D) गृत्समदः

2. सायणाचार्येण कस्य बेदस्य व्याख्यानं सर्वान्ते कृतम्?
(A) ऋग्वेदस्य (B) यजुर्वेदस्य
(C) सामवेदस्य (D) अथर्ववेदस्य

3. 'स्वधा अवस्तात् प्रयतिः परस्तात्'-इति कुत्र वर्णितम्?
(A) इन्द्रसूक्ते (B) पितृसूक्ते
(C) हिरण्यगर्भसूक्ते (D) नासदीयसूक्ते

4. ऋग्वेदे 'रुशद्वत्सा' इति कस्याः विशेषणम्?
(A) सरस्वत्याः (B) उषसः
(C) नद्याः (D) रात्र्याः

5. सपत्नक्षयणो मणिः कस्मिन् सूक्ते उपदिश्यते?
(A) पृथिवीसूक्ते (B) इन्द्रसूक्ते
(C) राष्ट्राभिवर्द्धनसूक्ते (D) सोमसूक्ते

6. 'यज्जाग्रतो दूरमुदैति दैवम्'- इत्यत्र उवटमतेन 'दैवम् पदस्य कोऽर्थः?
(A) देवो विज्ञानात्मा सोऽनेन गृहात इति दैवम्
(B) देवो ज्ञानकर्ता सोऽनेन ज्ञानी इति दैवम्
(C) देवो यज्ञे एव दीप्यते तद् द्रव्यम् दैंवम्
(D) देवो गृहे गृहे निर्मलीकरोति तज्जलं दैवम्

7. निम्नाङ्कितेषु प्रकृतिपाठः कः?
(A) मालापाठः (B) रेखापाठः
(C) पदपाठः (D) दण्डपाठः

8. निचृद्गायत्रीच्छन्दसि कियन्तो वर्णा भवन्ति पिङ्गलदिशा?
(A) 22 (B) 23
(C) 24 (D) 25

9. 'रात्रीभिरस्मा अहभिर्दशस्य'- इति कुत्र वर्णितम्?
(A) सूर्यसूक्ते (B) यमयमीसूक्ते
(C) रात्रिसूक्ते (D) कालसूक्ते

10. कठारण्यकं केन वेदेन सम्बद्धं वर्तते?
(A) ऋग्वेदेन (B) शुक्लयजुर्वेदेन
(C) सामवेदेन (D) कृष्णयजुर्वेदेन

11. 'इदं विद्यास्थानं व्याकरणस्य कात्स्न्र्य स्वार्थसाधकञ्च'- इत्युक्तिः कुत्र प्राप्यते ?
(A) पाणिनीयशिक्षायाम् (B) निरुक्ते
(C) ऋकप्रातिशाख्ये (D) सिद्धान्तकौमुद्याम्

12. 'ओरायन'- ग्रन्थस्य लेखकः कः?
(A) शङ्करपाण्डुरङ्गपण्डितः
(B) बालगङ्गाधरतिलकः
(C) शङ्करबालकृष्णदीक्षितः
(D) विन्टरनित्सः

13. 'दमूना' इति कस्य देवस्य विशेषणम् ?
(A) इन्द्रस्य (B) अग्नेः
(C) वरुणस्य (D) रुद्रस्य

14. 'य एक इद्धव्यः चर्षणीनामिन्द्रम् - मत्रेऽस्मिन् कस्यार्षम्?
(A) भरद्वाजस्य (B) वामदेवस्य
(C) अत्रेः (D) कण्वस्य

15. धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वार्थवच्छब्दस्वरूपं किम्भवति?

(A) पदसंज्ञम् (B) प्रातिपदिकसंज्ञा
(C) संहितासंज्ञम् (D) घिसंज्ञम्

16. 'द्रोणो व्रीहिः' इत्यत्र 'द्रोण' शब्दोत्तरप्रथमा विभक्तिः कस्मिन्नर्थे भवति?
(A) प्रातिपदिकार्थमात्रे
(B) लिङ्गमात्राधिक्ये
(C) परिमाणमात्राधिक्ये
(D) वचनमात्रे

17. 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' इति सूत्रस्य प्रत्यवसानार्थे किमुदाहरणम् ?
(A) आशयच्चामृतं देवान्
(B) वेदमध्यापयद्विधिम्।
(C) आसयत् सलिले पृथ्वीम्
(D) वेदार्थं स्वानवेदयत्

18. 'नमस्कुर्मो नृसिंहाय' इत्यत्र अप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थीविधायकम् अनुशासनं किमस्ति?
(A) तादर्थ्ये चतुर्थी वाच्या
(B) तुमर्थाच्च भाववचनात्
(C) क्रियार्थोपपदस्य च कर्मणि स्थानिनः
(D) नमः-स्वस्ति-स्वाहा-स्वधाऽलं-वषड्योगाच्च

19. अष्टौ च दश चेति विग्रहे 'अष्टादश' इति प्रयोगे आकारान्तादेशः केन विधीयते?
(A) 'आन्महतः समानाधिकरणजातीययोः' इत्यनेन
(B) 'अष्टनः कपाले हविषि' इत्यनेन
(C) 'विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्' इत्यनेन
(D) 'द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः इत्यनेन

20. 'परार्थाभिधानं वृत्तिः ' इति वृत्तिलक्षणं कस्मिन् प्रयोगे न प्रवर्तते?
(A) विद्यते (B) कुम्भकारः
(C) औपगवः (D) पीताम्बरः

21. 'हरि-शब्दस्य प्रकाशः' 'इतिहरि' इत्यत्र 'अव्ययं विभक्ति'- इत्यादिना कस्मिन्नर्थेऽव्ययीभावः?
(A) विभक्त्यर्थे (B) शब्दप्रादुर्भावे
(C) यौगपद्ये (D) अर्थाभावे

22. 'यातश्चा निर्धारणम् इति सूत्रेण जातिविशिष्टसमुदायादेकस्य निर्धारणे विहितायाः ष्ठयाः किमुदाहरणम्?
(A) गवां कृष्णा बहुक्षीरा
(B) गच्छतां धावन् शीघ्रः
(C) नृणां द्विजः श्रेष्ठः
(D) छात्राणां मैत्रः पटुः

23. चीनीभाषा निम्नलिखितेषु कस्मिन् वर्गे वर्तते?
(A) श्लिष्टयोगात्मके (B) अश्लिष्टयोगात्मके
(C) प्रश्लिष्टयोगात्मके (D) अयोगात्मके

24. ग्रीकभाषा कस्य परिवारस्य भाषा वर्तते?
(A) सामीपरिवारस्य
(B) हामीपरिवारस्य
(C) भारोपीयपरिवारस्य
(D) बान्तूपरिवारस्य

25. निम्नलिखितासु का भाषा 'केन्तुम्' वर्गस्य नास्ति?
(A) ग्रीकभाषा (B) केल्टिकभाषा
(C) जर्मनभाषा (D) रूसीभाषा

26. 'अश्वः' इत्यस्य शब्दस्य 'अवेस्ता' भाषायां किं रूपं विद्यते?
(A) अश्वः (B) अश्वो
(C) अश्पः (D) अस्पो

27. सञ्ज्ञासञ्ज्ञिसम्बन्धप्रतीतिः किमुच्यते न्यायनये?
(A) अनुमितिः (B) उपमितिः
(C) प्रत्यक्षम् (D) शब्दः

28. तुरी-वेमादिकं न्यायनये पटस्य कीदृशं कारणं मन्यते?
(A) निमित्तकारणम्
(B) समवायिकारणम्
(C) समवाय्यसमवायिकारणम्
(D) असमवायिकारणम्

29. तर्कसङ्ग्रहदिशा अन्वय-व्यतिरेकदृष्टान्तरहितो हेत्वाभासः कः?
(A) अनुपसंहारी (B) साधारणः
(C) असाधारणः (D) विरुद्धः

30. 'वह्निरनुष्णो द्रव्यत्वात्' इत्युदाहरणं कस्य हेत्वाभासस्य?
(A) आश्रयासिद्धहेत्वाभासस्य
(B) व्याप्यत्वासिद्धहेत्वाभासस्य
(C) स्वरूपासिद्धहेत्वाभासस्य
(D) बाधितहेत्वाभासस्य

31. वेदान्तसारानुसारं 'नित्यनैमित्तिकप्रायश्चित्तोपासनानां त्ववान्तरफलम्' किम्?
(A) स्वर्गलोकप्राप्तिः (B) पितृलोकसत्यलोकप्राप्तिः
(C) शरीरशुद्धिः (D) पापकर्मफलविनाशः

32. वेदान्तसारस्य 'विद्वन्मनोरञ्जनी' इति नाम्याः टीकायाः रचयिता कोऽस्ति?
(A) सदानन्दः (B) नृसिंह सरस्वती
(C) रामतीर्थः (D) कृष्णतीर्थः

33. विज्ञानमयकोशः किं भवति?
(A) निर्गुणं ब्रह्म (B) सगुणं ब्रह्म
(C) ज्ञानेन्द्रियसहिता बुद्धिः (D) ज्ञानेन्द्रियसहितं मनः

34. 'अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेर्नंदरा' स्थितिरियं समाधेः कीदृशो विघ्नः?
(A) विक्षेपः (B) कषायः

(C) लयः (D) रसास्वादः

35. सांख्यकारिकानुसारं सृष्टेरुत्पत्तिः कस्माद् भवति?

(A) असतः (B) सतः

(C) नासतः न सतः (D) पुरुषात्

36. पुरुषस्य सत्ता कस्मात् सिद्ध्यति?

(A) कारणभावात् (B) कार्यभावात्

(C) भोक्तृभावात् (D) उत्पत्तिभावात्

37. सांख्यदर्शनानुसारं करणं कतिविरधं वर्ते ?

(A) चतुर्दशविधम् (B) षोडशविधम्

(C) एकादशविधम् (D) त्रयोदशविधम्

38. 'स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या इत्यस्यां पङ्क्तौ 'त्रय' इत्यनेन पदेन किमभिरधीयते?

(A) बुद्धिः अहङ्कारः मनश्च

(B) मनः ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च

(C) पञ्चतन्मात्राणि पञ्चमहाभूतानि पञ्चप्राणाश्च

(D) पुरुषः अव्यक्तम् व्यक्तम् च

39. समीचीनां तालिकां चिनुत-

(a) मेघदूतम् (i) भट्टनारायणः

(b) रत्नावली (ii) अश्वघोषः

(c) वेणीसंहारः (iii) कालिदासः

(d) बुद्धचरितम् (iv) हर्षः

| | (a) | (b) | (c) | (d) |
|---|---|---|---|---|
| (A) | (iv) | (iii) | (ii) | (i) |
| (B) | (iii) | (i) | (ii) | (iv) |
| (C) | (iii) | (iv) | (i) | (ii) |
| (D) | (iii) | (iv) | (ii) | (i) |

40. बुद्धचरिते सिद्धार्थस्य हृदि संवेगोत्पत्तौ प्रथमं कारणं किं वर्णितम्?

(A) रुग्णस्य दर्शनम् (B) वृद्धस्य दर्शनम्

(C) मृतस्य दर्शनम् (D) उद्यानस्य दर्शनम्

41. दशकुमारचरिते सुरतमज्याः उपाख्यानमस्ति-

(A) राजवाहनचरिते

(B) अपहारवर्मचरिते

(C) पुष्पोद्भवचरिते

(D) उपहारवर्मचरिते

42. शिशुपालवधस्य सर्गसंख्या भवति-

(A) ऊनविंशतिः (B) विंशतिः

(C) एकविंशतिः (D) द्वाविंशतिः

43. एषु किं खण्डकाव्यं भवति?

(A) मेघदूतम् (B) शिशुपालवधम्

(C) कादम्बरी (D) किरातार्जुनीयम्

44. अभिज्ञानशाकुन्तले धीवरवृत्तान्तः कस्य उदाहरणम् ?

(A) प्रवेशकस्य (B) विष्कम्भकस्य

(C) अङ्कावतारस्य (D) अङ्कमुखस्य

45. मृच्छकटिके चारुदत्तस्य पुत्रः अस्ति-

(A) चन्दनकः (B) रोहितः

(C) रोहसेनः (D) आर्यकः

46. "नारिकेलफलसम्मितं बचः" इति कस्य कवेः विषये प्रोक्तम्?

(A) माघस्य (B) भारवेः

(C) कालिदासस्य (D) श्रीहर्षस्य

47. साहित्यदर्पणानुसारेण एतेषु कस्य रूपकमध्ये गणना नास्ति?

(A) प्रकरणस्य (B) त्रोटकस्य

(C) व्यायोगस्य (D) भाणस्य

48. साहित्यदर्पणे "कुन्देन्दुसुन्दरच्छायः" इति कस्य रसस्य वर्णः वर्णितः?

(A) वीरस्य (B) हास्यस्य

(C) श्रृगांरस्य (D) शान्तस्य

49. साहित्यदर्पणे साकल्येन कतिप्रकारा लक्षणा प्रोक्ता?

(A) अशीतिः (B) षोडश

(C) द्वात्रिंशत् (D) अष्ट

50. साहित्यदर्पणानुसारेण रिक्तं स्थानं पूरयत- स्याद् योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः।"

(A) लक्षणा (B) अभिधा

(C) व्यञ्जना (D) वाक्यम्

## नेट तृतीय प्रश्नपत्र नवम्बर-2017

1. 'मया सो अन्नमत्ति यो विपश्यति' इति कस्य ऋग्वेदीयसूक्तस्य अंशः?

(A) अग्निसूक्तस्य (B) वाक्सूक्तस्य

(C) इन्द्रसूक्तस्य (D) नासदीयसूक्तस्य

2. 'हिरण्यगर्भसूक्तम्' ऋग्वेदस्य कस्मिन् मण्डले आयाति?

(A) प्रथमे (B) अष्टमे

(C) नवमे (D) दशमे

3. ऋग्वेदस्य भाष्यकारः कः?

(A) महीधरः (B) स्कन्दस्वामी

(C) हलायुधः (D) भट्टभास्करः

4. 'व्रात्यकाण्डम्' कस्मिन् वेदे प्राप्यते?

(A) अथर्ववेदे (B) सामवेदे

(C) ऋग्वेदे (D) यजुर्वेदे

5. शुनःशेपस्य आख्यानं कुत्र प्राप्यते ?

(A) ऐतरेयब्राह्मणे (B) तैत्तिरीयब्राह्मणे

(C) शतपथब्राह्मणे (D) ताण्ड्यब्राह्मणे

6. बेदस्य नासिकास्थानीयमङ्गं किमस्ति ?
(A) शिक्षा (B) ज्योतिषम्
(C) निरुक्तम् (D) व्याकरणम्

7. 'यज्ञस्य देवमृत्विजम् ' इत्यत्र देवम् इति पदं कीदृशमस्ति ?
(A) आद्युदात्तम् (B) मध्योदात्तम्
(C) अन्तोदात्तम् (D) सर्वानुदात्तम्

8. स्वरितपरे अनुदात्ताः किमुच्यन्ते ?
(A) उदात्ताः (B) स्वरिताः
(C) प्रचयाः (D) अनुदात्ताः

9. 'भवाति' इति कस्मिन् लकारे रूपमस्ति ?
(A) लेट् (B) लोट्
(C) लङ् (D) लुङ्

10. सामवेदस्य ब्राह्मणमस्ति ?
(A) गोपथब्राह्मणम्
(B) शांखायनब्राह्मणम्
(C) संहितोपनिषब्राह्मणम्
(D) शतपथ

11. बृहदारण्यकम् केन वेदेन सम्बद्धमस्ति ?
(A) ऋग्वेदेन (B) यजुर्वेदेन
(C) सामवेदेन (D) अथर्ववेदेन

12. 'अरा इव रथनाभौ संहता यत्र नाड्यः' इत्युक्तिः कुत्र विद्यते ?
(A) मुण्डकोपनिषदि (B) कठोपनिषदि
(C) बृहदारण्यकोपनिषदि (D) छन्दोग्योपनिषदि

13. अतिमुक्तिः कुत्र वर्णिता ?
(A) ईशावास्योपनिषदि
(B) ऐतरेयोपनिषदि
(C) बृहदारण्यकोपनिषदि
(D) प्रश्नोपनिषदि

14. 'आत्मा वा इदमेक एवाग्र आसीत्' - इत्युक्तिः कुत्र प्राप्यते ?
(A) ईशावास्योपनिषदि
(B) तैत्तिरीयोपनिषदि
(C) ऐतरेयोपनिषदि
(D) मुण्डकोपनिषदि

15. 'अन्नं बहु कुर्वीत'-अयमुपदेशः कुत्र प्राप्यते ?
(A) ईशावास्योपनिषदि
(B) तैत्तिरीयोपनिषदि
(C) छान्दोग्योपनिषदि
(D) प्रश्नोपनिषदि

16. 'मृगो न भीमः कुचरो गिरिष्ठाः'- इत्यत्र 'न' कीदृशः ?
(A) उपमार्थीयः (B) प्रतिषेधार्थीयः
(C) विचिकित्सार्थीयः (D) समुच्चयार्थः

17. 'पुरुषः इति पदस्य निर्वचने किं नास्ति ?
(A) पुरिषादः (B) परुषः
(C) पुरिशयः (D) पूरयतेः

18. 'धर्मसूत्रम्'- केन वेदाङ्गेन सह सम्बद्धमस्ति ?
(A) शिक्षावेदाङ्गेन (B) कल्पवेदाङ्गेन
(C) व्याकरणवेदाङ्गेन (D) निरुक्तवेदाङ्गेन

19. निरुक्तदिशा पदजातानि कति सन्ति ?
(A) त्रीणि (B) चत्वारि
(C) पंच (D) षट्

20. अथर्ववेदस्य किं गृह्यसूत्रम् अस्ति ?
(A) खादिरगृह्यसूत्रम्
(B) कात्यायनगृह्यसूत्रम्
(C) कौशिकगृह्यसूम्
(D) वैखानसगृह्यसूत्रम्

21. ऋग्वेदप्रातिशाख्यस्य प्रवक्ता कः अस्ति ?
(A) शौनकः (B) उवटः
(C) कात्यायनः (D) अनन्तभट्टः

22. 'स्वारान्तरे व्यञ्जनानि' कस्याङ्गं भवन्ति ऋक्प्रातिशाख्यमते?
(A) पूर्वस्य (B) उत्तरस्य
(C) अपूर्वस्य (D) मध्यस्य

23. ऋक्प्रातिशाख्यदिशा व्यञ्जनानामाद्याः किं भवन्ति ?
(A) अन्तःस्थाः (B) ऊष्माणः
(C) सन्ध्यक्षराणि (D) स्पर्शा

24. ऋक्प्रातिशाख्यमतेन वक्ष्यमाणेषु सोष्मवर्णः कः ?
(A) ह (B) श
(C) ष (D) झ

25. 'आष्टिषेणः' इत्यत्र कियान् स्वरभक्तिकालः ?
(A) एकमात्राकालः (B) अर्धमात्राकालः
(C) पादमात्राकालः (D) द्विमात्राकालः

26. पाणिनीयशिक्षानुसारं स्वरितस्वरोच्चारणकाले हस्तप्रदर्शनविधिः कुत्र विधातव्यः ?
(A) कर्णमूले (B) हृदि
(C) मूर्ध्नि (D) सर्वास्ये

27. कथं ज्ञायते महाभाष्यदृष्ट्या 'सिद्धः शब्दो ऽर्थः सम्बन्धश्चे' ति?
(A) अर्थक्रियार्थिभ्यः (B) लोकतः
(C) शास्त्रतः (D) कोशतः

28. 'पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥'
अनया कारिकया भर्तृहरिः किं बोधितवान्?
(A) वर्णानां सत्यत्वम् (B) पदानां सत्यत्वम्
(C) वाक्यस्य सत्यत्वम् (D) सर्वेषां सत्यत्वम्

29. 'एध्' धातोः लुङि उत्तमपुरुषैकवचने कः प्रयोगः?
(A) ऐधिषि (B) एधिषीय

(C) ऐधिष्ये (D) ऐधे

3 0. 'भवती' त्यर्थे 'यत्' प्रत्ययान्तः कः प्रयोगः?

(A) भव्यम् (B) भव्यः

(C) भाव्यम् (D) भाव्य

31. एषु 'मतुप्' प्रत्ययान्तोऽशुद्धः प्रयोगोऽन्वेष्टव्यः ?

(A) यववान् (B) ज्ञानवान्

(C) विद्यावान् (D) लक्ष्मीवान्

32. स्त्रियां सीमन्' शब्दस्य प्रथमायां कः प्रयोगो भवति?

(A) सीमन् (B) सीम्नी

(C) सीमा (D) सीमना

33. 'वृद्धो जनो दुःखशतानि भुङ्क्ते' इत्यत्रात्मनेषद- विधायकं सूत्रं किम्?

(A) भावकर्मणोः

(B) अकर्मकाच्च

(C) कर्तृस्थे चाशरीरे कर्मणि

(D) भुजोऽनवने

34. 'अख्यातोपयोगे' इत्यत्र प्रयुक्तस्योपयोगशब्दस्य कोऽर्थः?

(A) वक्ता

(B) नियमपूर्वकविद्यास्वीकारः

(C) नियतकालं भृत्या स्वीकरणम्

(D) अन्यकर्तृकोऽभिलाषः

35. 'अरबी' भाषा कस्य भाषापरिवारस्य भाषा अस्ति?

(A) सामीपरिवारस्य (B) हामीपरिवारस्य

(C) काकेशीपरिवारस्य (D) हित्तीपरिवारस्य

36. कलिङ्गराजखारवेलस्य उल्लेखः कस्मिन्नभिलेखे वर्तते?

(A) एहोल-शिलालेखे (B) हाथीगुम्फालेखे

(C) गिरनारलेखे (D) जूनागढलेखे

37. निम्नलिखितेषु कस्यैकोऽभिलेखो यूनानीलिप्यां वर्तते?

(A) समुद्रगुप्तस्य (B) पुलकेशि

(C) अशोकस्य (D) रुद्रदाम्नः

38. अधोलिखितानां 'केन सह कस्य सम्बन्धः' इति समीचीनां तालिकां चिनुत ।

(क) नैयायिकाः (i) प्रामाण्यं स्वतोऽप्रामाण्यं परतः

(ख) पूर्वमीमांसकाः (ii) प्रामाण्याप्रामाण्ये परतः

(ग) जैनाः (iii) अप्रामाण्यं स्वतः प्रामाण्यं परतः

(घ) बौद्धाः (iv) प्रामाण्याप्रामाण्ये स्वतः

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| (A) | (ii) | (i) | (iv) | (iii) |
| (B) | (iii) | (iv) | (i) | (ii) |
| (C) | (ii) | (iii) | (i) | (iv) |
| (D) | (ii) | (iv) | (i) | (iii) |

39. तर्कसंग्रहदीपिकायामीश्वरस्य लक्षणं किमुक्तम्?

(A) ज्ञानाधिकरणत्वम्

(B) नित्यज्ञानाधिकरणत्वम्

(C) प्रत्यक्षग्राह्यत्वम्

(D) सुखादिमत्त्वम्

40. न्यायसिद्धान्तमुक्तावलीरीत्याऽनुमितौ व्याप्तिज्ञानं किम्भवति?

(A) व्यापारः (B) परामर्शः

(C) पक्षः (D) करणम्

41. 'वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः' इति धर्मलक्षणे लौगाक्षिभास्करेण 'अर्थ' पदोपादानं किमर्थम्?

(A) स्वर्गादिप्रयोजनेऽतिव्याप्तिवारणाय

(B) भोजनादावतिव्याप्तिवारणाय

(C) श्येनयागादावतिव्याप्तिवारणाय

(D) हस्तप्रक्षालनादावतिव्याप्तिवारणाय

42. बौद्धानां कति प्रस्थानानि प्रसिद्धानि सन्ति ?

(A) चत्वारि (B) त्रीणि

(C) पञ्च (D) षड्

43. बौद्धदर्शनानुसारं चित्तस्कन्धः कतिरविधः?

(A) चतुर्विधः (B) पञ्चविधः

(C) षड्विधः (D) सप्तविधः

44. 'ईक्षतेर्नाशब्दम्' इत्यस्मिन् सूत्रे निम्नलिखितेषु शाङ्करभाष्यानुसारं किं मतं निरस्यते ?

(A) ब्रह्म जगतः कारणमस्ति

(B) प्रधानं जगतः कारणमस्ति

(C) ब्रह्म सर्वज्ञमस्ति सर्वकारणात्

(D) ईक्षणशक्तिर्ब्रह्मणि नास्ति

45. 'तद् ब्रह्म सर्वज्ञं सर्वशक्तिजगदुत्पत्तिस्थितिलयकारणम्' इत्यवबोधः शाङ्करभाष्यानुसारं कस्माद् भवति ?

(A) प्रत्यक्षदर्शनात् (B) वेदान्तशास्त्रात्

(C) जगद्वैचित्र्यात् (D) कारणकार्यभावात्

46. 'दृग्दर्शनशक्त्योरेकात्मता' इति लक्षणं योगसूत्रे कस्य विद्यते?

(A) अविद्यायाः (B) अभिनिवेशस्य

(C) अस्मितायाः (D) रागस्य

47. वेदान्तसारानुसारं अनुबन्धे किं न गण्यते ?

(A) अधिकारी (B) विषयः

(C) साधनानि (D) सम्बन्धः

48. वेदान्तदर्शनानुसारं व्यष्ट्युपहितं चैतन्यं किमुच्यते?

(A) ईश्वरः (B) प्राज्ञः

(C) आत्मा (D) ब्रह्म

49. 'पुद्गलः' इति शब्दः कस्य दर्शनस्य वर्तते?

(A) बौद्धदर्शनस्य

(B) जैनदर्शनस्य

(C) सांख्यदर्शनस्य

(D) वेदान्तदर्शनस्य

50. जिनदत्तसूरिमते जिनः को भवितुमर्हति ?

(A) वेदवेदाङ्गविद् (B) अष्टादशदोषेभ्यो
(C) तत्त्वज्ञानी (D) जैनदर्शने दीक्षितः

51. एषु किं रामायणाश्रितं न भवति ?

(A) पञ्चरात्रम् (B) उत्तररामचरितम्
(C) महानाटकम् (D) रघुवंशम्

52. एषु किं पर्व महाभारते नास्ति ?

(A) सभापर्व (B) भीमपर्व
(C) वनपर्व (D) शल्यपर्व

53. एषु किं महापुराणम् अस्ति ?

(A) कूर्मपुराण (B) साम्बपुराण
(C) एकाम्रपुराण (D) आदित्यपुराण

54. काव्यमीमांसायां प्रथमेऽध्याये रीतिनिर्णयविषये अस्य नाम अस्ति?

(A) सुवर्णनाभः (B) चित्राङ्गदः
(C) प्रचेतायनः (D) भरतः

55. 'त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम्।
आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः॥ अत्र मनसः प्रतिबिम्बनं केन सह वर्तते ' ?

(A) हिमांशुना सह (B) कुसुमेन सह
(C) कुमुद्वत्या सह (D) मनोभवेन सह

56. राघवविरहज्वालासन्तापितसह्यशैलशिखरेषु ।
शिशिरे सुखं शयानाः कपयः कुप्यन्ति पवनतनयाय ॥
रसगंगाधरे प्रथमे आनने श्लोकोऽयमुदाहरणं भवति?

(A) उत्तमोत्तमकाव्यस्य (B) उत्तमकाव्यस्य
(C) मध्यमकाव्यस्य (D) अधमकाव्यस्य

57. 'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः' इत्यादिश्लोकः ध्वन्यालोके प्रथमे उद्योते कस्य उदाहरणं भवति ?

(A) अविवक्षितवाच्यस्य
(C) आक्षेपालङ्कारस्य
(B) विवक्षितान्यपरवाच्यस्य
(D) विशेषोक्त्यलङ्कारस्य

58. दशरूपकमते मुखसन्धेः अङ्गानि भवन्ति ?

(A) एकादश (B) द्वादश
(C) त्रयोदश (D) चतुर्दश

59. धनञ्जयमते भूयसे फललाभाय औत्सुक्यमात्रं भवति ?

(A) आरम्भः (B) यत्नः
(C) प्रास्याशा (D) फलागमः

60. कालक्रमानुसारं तालिकां चिनुत ?

(a) जगन्नाथः (b) भरतः
(c) विश्वनाथ-कविराजः (d) मम्मटः

| | | | | |
|---|---|---|---|---|
| (A) | b | d | c | a |
| (B) | b | d | a | c |
| (C) | b | a | c | d |
| (D) | a | b | c | d |

61. धर्मादिसाधनोपायः सुकुमारक्रमोदितः ।
काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः ॥ अत्र कुन्तकेन किं प्रतिपादितम् ?

(A) काव्यलक्षणम् (B) काव्यहेतुः
(C) काव्यप्रयोजनम् (D) काव्यवैविध्यम्

62. अधस्तनयुग्मानां समीचीनमेलनतालिकां चिनुत-

| | |
|---|---|
| (क) चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः | 1 मृच्छकटिकम् |
| (ख) आसीत् स दोलाचलचित्तवृत्तिः | 2 कर्णभारम् |
| (ग) हृदये गृह्यते नारी यदीदं नास्ति गम्यताम् | 3 रघुवंशम् |
| (घ) हुतं च दत्तं च तथैव तिष्ठति | 4 मुद्राराक्षसम् |

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| (A) | (4) | (1) | (2) | (3) |
| (B) | (4) | (2) | (1) | (3) |
| (C) | (3) | (4) | (1) | (2) |
| (D) | (4) | (3) | (1) | (2) |

63. 'हृतेऽपि भारे महतस्त्रपाभरादुवाह दुःखेन भृशानतं शिरः' – शिशुपालवधे महाकाव्ये इयं वर्णना केन सम्बद्धा ?

(A) यमवाहनमहिषेण (B) वरुणेन
(C) कुबेरेण (D) इन्द्रेण

64. अभिज्ञानशाकुन्तले दुष्यन्तस्य पुरोहितः भवति ?

(A) वातायनः (B) सोमरातः
(C) गालवः (D) मारीचः

65. मुद्राराक्षसे चन्द्रगुप्तस्य अन्तःपुरचरः कञ्चुकी भवति ?

(A) सिद्धार्थकः (B) चन्दनदासः
(C) वैहीनरिः (D) भागुरायणः

66. दशकुमारचरिते अष्टमे उच्छ्वासे विदर्भदेशस्य भोजवंशभूषणस्य कस्य राज्ञः वर्णनमस्ति ?

(A) पुण्यवर्मणः (B) मानसारस्य
(C) राजहंसस्य (D) प्रहारवर्मणः

67. 'तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ' रघुवंशेऽयं पद्यांशः केन सम्बद्धः ?

(A) श्रीरामेण (B) रघुणा
(C) अजेन (D) दिलीपेन

68. 'मदेकपुत्रा जननी जरातुरा' नैषधचरिते इयमुक्तिर्भवति ?

(A) दमयन्त्याः (B) हंसस्य
(C) भीमस्य

69. 'हर्षचरितम्' कतिषु उच्छ्वासेषु रचितमस्ति ?
(A) त्रिषु (B) पञ्चसु
(C) सप्तसु (D) अष्टसु

70. उत्तररामचरिते 'मैत्रावरुणिः' पदं कस्य कृते प्रयुक्तम्?
(A) विश्वामित्रस्य कृते (B) वसिष्ठस्य कृते
(C) अष्टावक्रस्य कृते (D) ऋष्यशृङ्गस्य कृते

71. 'अलब्धलाभार्था लब्धपरिरक्षणी' इत्यादि-विशेषणानि कौटिलीयार्थशास्त्रे कां लक्षयन्ति ?
(A) भेदनीतिम् (B) दण्डनीतिम्
(C) वार्ताम् (D) आन्वीक्षिकीम्

72. 'संख्यातार्थेषु कर्मसु नियुक्ता ये यथादिष्टमर्थं सविशेषं वा कुर्युः तानमात्यान् कुर्वीत'- कौटिलीयार्थशास्त्रे उल्लिखितमेतत् मरतं भवति ?
(A) भारद्वाजस्य (B) विशालाक्षस्य
(C) बाहुदन्तीपुत्रस्य (D) पिशुनस्य

73. याज्ञवल्क्यमते पैतामहे द्रव्ये अनेकपितृकपुत्राणां भागविभागः कथं भवति ?
(A) पितृतः (B) कामतः
(C) समभावतः (D) ज्येष्ठकनिष्ठभावतः

74. मनुमते वैश्यस्य मेखला कीदृशी कार्या ?
(A) मुञ्जमयी (B) मूर्वामयी
(C) शणतान्तवी (D) कुशमयी

75. मनुमते एतेषां कस्य मात्रा नृपस्य निर्माणे न गृहीता ?
(A) इन्द्रस्य (B) चन्द्रस्य
(C) अश्विनोः (D) अनिलस्य

## नेट प्रश्नपत्र जुलाई-2018

1. शांखायन-शाखायाः सम्बन्धः वर्तते-
(A) अथर्ववेदेन (B) ऋग्वेदेन
(C) सामवेदेन (D) कृष्णयजुर्वेदेन

2. 'द्राह्यायण श्रौतसूत्रम्' कस्य वेदस्य विद्यते?
(A) अथर्ववेदस्य (B) कृष्णयजुर्वेदस्य
(C) ऋग्वेदस्य (D) सामवेदस्य

3. 'एतद्वचो जरितर्मापिमृष्ठा आयत्तेघोषानुत्तरा युगानि'- इति मन्त्रांशो वर्तते-
(A) पुरूरवा-उर्वशीसूक्ते (B) सरमा-पणिसूक्ते
(C) विश्वामित्र-नदीसूक्ते (D) यम-यमीसूक्ते

4. अधस्तनेषु उचितसम्बन्धयुतं विकल्पं चिनुत-
(A) "यो रध्रस्य चोदिता यः कृशस्य" - इन्द्रदेवता
(B) "राजन्तमध्वराणां गोपामृतस्य दीदिविम्"- विष्णुसूक्तम्
(C) "विश्वं प्रतीची सप्रथः उदस्थात्" - सावित्रीसूक्त
(D) "अहं सुवे पितरमस्य मूर्धन्"- रुद्रदेवता

5. यो वाघते ददाति सूनरं वसु'- अत्र 'वाघते' पदस्य कोऽर्थः:-
(A) यज्ञकत्रे (B) राज्ञे
(C) बाधकाय (D) सूर्याय

6. नामाख्याताभ्यां वियुक्ता अपि उपसर्गाः वाचकाः भवन्तीति कः मन्यते-
(A) वार्ष्यायणिः (B) शाकटायनः
(C) गार्ग्यः (D) कौत्सः

7. वेदेष्वेव प्रयुज्यते प्रत्ययः-
(A) अध्यै (B) तुमुन
(C) क्त्वा (D) क्त

8. "यस्मान्न ऋते विजयन्ते" - इत्यत्र 'यस्मात्' पदेन कः गृह्यते -
(A) विष्णुः (B) रुद्रः
(C) इन्द्रः (D) वरुणः

9. ऋग्वेदस्य कस्मिन् मण्डले ' विश्वामित्रनदीसंवादसूक्तम्' विद्यते-
(A) द्वितीये (B) दशमे
(C) तृतीये (D) अष्टमे

10. परिशिष्टभागमतिरिच्य निरुक्ते कति अध्यायाः सन्ति-
(A) सप्त (B) द्वादश
(C) पञ्च (D) चतुर्दश

11. 'प्रचोद्यात्' इति कस्मिन् लकारे रूपमस्ति-
(A) लिङ्ग (B) लोट्
(C) लृट् (D) लेट्

12. 'स जातो अत्यरिच्यत'- इत्यत्र ' सः ' पदेन कः गृह्यते-
(A) इन्द्रः (B) पुरुषः
(C) प्रजापतिः (D) विष्णुः

13. " इत्याख्यस्य ग्रन्थस्य प्रणेता वैदेशिको विद्वान कः-
(A) एच.टी. कोलब्रुक् (B) एफ. मैक्समूलरः
(C) ए. मैक्डानलः (D) एच. विल्सनः

14. सामवेदीयाः षड्ज-मध्यम-पञ्चमस्वरा त्रैस्वर्यस्वरे अन्तर्भवन्ति-
(A) अनुदत्ते (B) स्वरिते
(C) प्रचये (D) उदत्ते

15. ' बृहती '-छन्दसि अक्षराणां संख्या विद्यते-
(A) 48 (B) 28
(C) 36 (D) 32

16. दर्शपौर्णमासेष्टियागे अनुयाजानां संख्या विद्यते-
(A) पञ्च (B) त्रयः

(C) एकादश (D) अष्ट

17. 'वृक्षस्य नु ते पुरुहूत वयाः '- इत्यत्र 'नु' विद्यते-

(A) उपमार्थीयः (B) हेत्वपदेशार्थीयः

(C) अनुप्रश्नार्थीयः (D) अवकुत्सार्थीयः

18. 'नियतवाचो युक्तयो नियतानुपूर्व्या भवन्ति'- इति कथन वर्तते-

(A) शाकटायनस्य (B) औदुम्बरायणस्य

(C) गार्ग्यस्य (D) कौत्सस्य

19. ऋक्संहितायाः समुपलब्धभाष्येषु प्रथमो भाष्यकारः विद्यते-

(A) सायणः (B) आनन्दतीर्थः

(C) स्कन्दस्वामी (D) वेङ्कटमाधव

20. ऋक्प्रातिशाख्यस्य पटलसंख्या कियती-

(A) 16 (B) 14

(C) 12 (D) 18

21. अथर्ववेदेन सम्बद्धा शिक्षा का वर्तते-

(A) लोमशी शिक्षा (B) माण्डूकी शिक्षा

(C) गौतमी शिक्षा (D) केशवी शिक्षा

22. 'शिवसंकल्पसूक्तम्' माध्यन्दिनसंहितायां कस्मिन् अध्याये समुपलभ्यते-

(A) षोडशे (B) चतुस्त्रिंशे

(C) एकत्रिंशे (D) चत्वारिंशे

23. भर्तृहरिदिशा को ब्रह्मामृतमश्नुते ?

(A) शब्दप्रवृत्तितत्त्वज्ञः

(B) पञ्चविंशतितत्त्वज्ञः

(C) प्रमाणादिषोडशपदार्थनिष्णातः

(D) याज्ञिकः

24. परेषामसमाख्येयं मणिरूप्यादिविज्ञानं भर्तृहरिदिशा कस्माज्ञायते?

(A) शाब्दात् (B) अनुमानाद

(C) अभ्यासाद (D) उपमानात्

25. "एध्" धातोः लुङ्लकारे प्रथमपुरुषबहुवचने कः प्रयोगः ?

(A) ऐधन्त (B) ऐधिष्ट

(C) ऐधिषत (D) ऐधत

26. 'लोटो लङवत्' इति सूत्रप्रवृत्तिः कस्मिन् प्रयोगे जाता?

(A) अभवः (B) भवाम

(C) भवेताम् (D) अभविष्यत्

27. 'महद् यशो यस्य सः' इति विग्रहे बहुव्रीहिसमासे कः प्रयोगः ?

(A) महायशः (B) महायशसः

(C) महायशाः (D) महायशस्कः

28. 'कुगतिप्रादयः' इति समासविधायकसूत्रस्य किमुदाहरणं नास्ति?

(A) पटपटाकृत्य (B) कुम्भकारः

(C) सुपुरुषः (D) हस्तेकृत्य

29. ' प्रगृह्यम्' इत्यत्र कः कृत्यप्रत्ययः ?

(A) ण्यत् (B) यत्

(C) क्यप् (D) तथव्यत्

30 'विद्वांसः सन्ति अस्मिन्' इति विग्रहे को मत्वर्थीयः प्रयोगः ?

(A) विद्वद्वान् (B) विदुष्मान्

(C) विद्वत्वान् (D) विद्वत्मान्

31. या स्वयमेवाध्यापिका सा किमुच्यते?

(A) उपाध्यायानी (B) उपाध्याया

(C) आचार्यानी (D) आचार्याणी

32. 'वृत्तिसर्गतायनेषु क्रमः ' इत्यात्मनेपद्विधायकसूत्रस्य सर्गार्थक-क्रम्' धातोरुदाहरणं चिनुत।

(A) अध्ययनाय क्रमते (B) ऋचि क्रमते बुद्धिः

(C) क्रमन्तेऽस्मिन् (D)शास्त्राणि आक्रमते सूर्यः

33. "बोधयति पदम्" इत्यत्र परस्मैपदविधायकं किमस्ति-पाणिनिसूत्रम्?

(A) विभाषाकर्मकात्

(B) निगरणचलनार्थेभ्यश्च

(C) बुध-युध-नश-जनेङ्-प्र-द्रु-स्रुभ्यो णेः

(D) अणावकर्मकाच्चित्तवत्कर्तृकात्

34. अधोलिखितानां केन सह कस्य सम्बन्धः? इति समीचीनां तालिकां चिनुत।

(क) अपवर्गे तृतीया (1) ओदनं भुञ्जानो विषं भुङ्क्ते।

(ख) तथायुक्तं चाऽनीप्सितम् (2) प्रयुम्नः कृष्णात् प्रति ।

(ग) धारेरुत्तमर्णः (3) क्रोशेन अनुवाकोऽधीतः ।

(घ) प्रतिनिधि-प्रतिदाने च यस्मात् (4) भक्ताय धारयति मोक्षंहरिः।

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| (A) | (3), | (1), | (4), | (2) |
| (B) | (3), | (2), | (4), | (1) |
| (C) | (2), | (3), | (1), | (4) |
| (D) | (4), | (2), | (3), | (1) |

35. "पराजेरसोढः" इत्यनेन सूत्रेण कतमं कारक भवति?

(A) अधिकरणम् (B) सम्प्रदानम्

(C) अपादानम् (D) करणम्

36. "प्रातिपदिकम्" इति संज्ञा केन सूत्रेण विधीयते?

(A) प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा।

(B) प्रातिपदिकान्तनुम्विभक्तिषु च।

(C) ङ्याप्प्रातिपदिकात्।

(D) अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ।

37. निम्नाङ्कितेषु 'प्रगृह्यम्' इति संज्ञाविधायकं सूत्रं किमस्ति?

(A) ओत्  (B) तरप्तमपौ घः

(C) तृतीयासमासे  (D) आद्यन्तवदेकस्मिन्

38. 'ब्राह्मणेनावश्यं शब्दा ज्ञेयाः' कथनमिदं पतञ्जलिना कस्य व्याकरणप्रयोजनस्य विषये कृतम्?

(A) रक्षाविषये  (B) ऊहविषये

(C) आगमविषये  (D) लघुविषये

39. पतञ्जलिमतानुसारं शब्दः कः?

(A) अर्थरूपम्

(B) यद् इङ्गितं चेष्टितम्

(C) यद् भिन्नेष्वभिन्नं, छिन्नेष्वच्छिन्नम्

(D) प्रतीतपदार्थको लोके ध्वनिः

40. पाणिनीयशिक्षानुसारं स्वराणां संख्या का?

(A) विंशतिः  (B) एकविंशतिः

(C) पञ्चविंशतिः  (D) अष्टादश

41. 'समीकरणम्' कस्य दिशा वर्तते?

(A) ध्वनिपरिवर्तनस्य  (B) रूपपरिवर्तनस्य

(C) अर्थपरिवर्तनस्य  (D) वाक्यपरिवर्तनस्य

42. हिब्रू-भाषा कस्य भाषापरिवारस्य भाषाऽस्ति?

(A) चीनीपरिवारस्य  (B) भारोपीयपरिवारस्य

(C) सूडानीपरिवारस्य  (D) सामी-हामीपरिवारस्य

43. संस्कृतभाषायाः यूरोपीयभाषाभिः सम्बन्धः सर्वप्रथमं केनोद्घाटितः?

(A) मैक्समूलरमहोदयेन  (B) विन्टरनित्ज़ महोदयेन

(C) सर विलियमजोन्स-महोदयेन  (D) वेबरमहोदयेन

44. बान्तूपरिवारः कस्य खण्डस्य भाषापरिवारोस्ति?

(A) यूरेशियाखण्डस्य  (B) अफ्रीकाखण्डस्य

(C) प्रशान्तमहासागरीयखण्डस्य  (D) अमेरिकाखण्डस्य

45. अर्थसङ्ग्रहे प्रत्ययस्य लिंङ्शेन कीदृशी भावना प्रोक्ता?

(A) शाब्दी  (B) आर्थी

(C) शाब्दी आर्थी च  (D) स्वर्गभावना

46. अर्थसङ्ग्रहानुसारं ' शब्दसामर्थ्यम्' इत्यनेन कतमं प्रमाणं लक्षितम्?

(A) श्रुतिः  (B) प्रकरणम्

(C) लिङ्गम्  (D) वाक्यम्

47. तर्कसङ्ग्रहदीपिकानुसारं स्पर्शानुमेयः कः पदार्थः ?

(A) आकाशम्  (B) मनः

(C) आत्मा  (D) वायुः

48. तर्कसङ्ग्रहानुसारम् आत्मनो विशेषगुणः कः?

(A) वेगसंस्कारः  (B)स्थितिस्थापकः

(C) प्रयत्नः  (D) शब्दः

49. तर्कभाषानुसारम् आत्मा कीदृशः?

(A) सर्वस्मिन् एकोऽणुश्च

(B) विभुरनित्यश्च

(C) देहेन्द्रियाद्यनतिरिक्तः

(D) प्रतिशरीरं भिन्नो विभुर्नित्यश्च

50. साध्यशून्यो यत्र पक्षः सः कीदृशो हेत्वाभासः?

(A) बाधः  (B) आश्रयासिद्धः

(C) असाधारणोऽनैकान्तिकः  (D) विरुद्धः

51. तर्कभाषारीत्या समवायस्य प्रत्यक्षग्राह्यत्वे इन्द्रियार्थसन्निकर्षः कः?

(A) संयोग  (B) संयुक्तसमवायः

(C) विशेषण-विशेष्यभावः  (D) संयुक्तसमवेतसमवायः

52. वेदान्तसारानुसारं "सगुणब्रह्मविषयमानसव्यापाररूपाणि' कर्माणि निम्नलिखितेषु कानि भवन्ति?

(A) काम्यकर्माणि  (B) नित्यकर्माणि

(C) उपासनाकर्माणि  (D) साध्यकर्माणि

53. 'जीवब्रह्मैक्यं शुद्धचैतन्यं प्रमेयम्' इत्ययम् अनुबन्धः कतमः ?

(A) अधिकारी  (B) विषयः

(C) सम्बन्धः  (D) प्रयोजनम्

54. समष्ट्यज्ञानोपहितं चैतन्यं किं भवति?

(A) जीवः  (B) ईश्वरः

(C) ब्रह्म  (D) श्राद्धः

55. 'अतत्त्वतोऽन्यथाप्रथा' किमुच्यते?

(A) विकारः  (B) विवर्तः

(C) शब्दः  (D) अनुपहितचैतन्यम्

56. ' ब्रह्मसूत्रम्' इत्यस्य ग्रन्थस्य रचयिता कोऽस्ति?

(A) बादरायणः  (B) पाराशरः

(C) शङ्कराचार्यः  (D) जैमिनिः

57. 'शारीरकम्' इति नाम्ना किं भाष्यं प्रसिद्धमस्ति?

(A) सांख्यकारिकाभाष्यम्  (B) मीमांसाभाष्यम्

(C) ब्रह्मसूत्रभाष्यम्  (D) उपनिषद्भाष्यम्

58. ' दृष्टवदानुश्रविकः ' इत्यस्मिन् सांख्यकारिकाप्रयोगे

'आनुश्रविकः' इत्यस्य पदस्य कोऽर्थः ?

(A) श्रुतिः (B) स्मृतिः

(C) वेदाङ्गम् (D) पुराणम्

59. अव्यक्तं कीदृशं भवति?

(A) सक्रियम् (B) निष्क्रियम्

(C) आश्रितम् (D) सावयवम्

60. व्यक्तस्य च प्रधानस्य च कः समानधर्मः?

(A) त्रिगुणत्वम् (B) सक्रियत्वम्

(C) हेतुमत्वम् (D) लिङ्गत्वम्

61. सांख्यदर्शनानुसारं "त्रैगुण्यविपर्ययात् " किं सिध्यति?

(A) अव्यक्तस्य नित्यत्वम्

(B) पुरुषबहुत्वम्

(C) व्यक्तस्य त्रिगुणात्मकत्वम्

(D) अव्यक्तस्य कारणत्वम्

62. अधस्तनानां केन सह कस्य सम्बन्धः? समीचीनां तालिकां चिनुत-

(क) मिथ्याज्ञानमतद्रूपप्रतिष्ठम् (1) स्वाध्यायात्

(ख) इष्टदेवतासम्प्रयोगः (2) यमाः

(ग) अनुभूतविषयासम्प्रमोषः (3) विपर्ययः

(घ) सार्वभौमा महाव्रतम् (4) स्मृतिः

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| (A) | (3) | (1) | (4) | (2) |
| (B) | (1) | (3) | (2) | (4) |
| (C) | (2) | (1) | (3) | (4) |
| (D) | (4) | (2) | (1) | (3) |

63. "यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति,निविशमानमनुनिविशन्ते तथेन्द्रियाणि चित्तनिरोधे निरुद्धानीत्येषः"।एषा व्याख्या कस्य योगाङ्गस्य , व्यासभाष्यानुसारेण?

(A) प्रत्याहारस्य (B) धारणायाः

(C) ध्यानस्य (D) ब्रह्मचर्यस्य

64. योगदर्शनस्य व्यासभाष्यानुसारेण चित्तभूमीनां समुचितः क्रमोऽस्ति-

(A) क्षिप्तम्,विक्षिप्तम्, मूढम्, एकाग्रम्,निरुद्धम् ।

(B) क्षिप्तम्,मूढम्,विक्षिप्तम्,एकाग्रम्,निरुद्धम्।

(C) विक्षिप्तम्,मूढम्, एकाग्रम्,क्षिप्तम्, निरुद्धम् ।

(D) निरुद्धम्,मूढम्,विक्षिप्तम्,क्षिप्तम्,एकाग्रम्।

65. जैनदर्शनानुसारेण निम्नाङ्कितस्य सप्तभङ्गिन्यायस्य समुचितः क्रमः कोऽस्ति?

(A) स्यादस्ति च नास्ति च, स्यादवक्तव्यः , स्यान्नास्ति, स्यादस्ति चावक्तव्यः , स्यान्नास्ति चावक्तव्यः , स्यादस्ति च नास्ति चावक्तव्यः ।

(B) स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः , स्यादस्ति च नास्ति चावक्तव्यः ।

(C) स्यादस्ति च नास्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादस्ति चावक्तव्यः , स्यादवक्तव्यः , स्यादस्ति च नास्ति च, स्यान्नास्ति स्यादस्ति।

(D) स्यादस्ति, स्यादवक्तव्यः , स्यादस्ति चावक्तव्यः , स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यान्नास्ति चावक्तव्यः, स्यादस्ति च नास्ति चावक्तव्यः ।

66. अधोलिखितानां केन सह कस्य सम्बन्धः ? समीचीनां तालिकां चिनुत।

(क) माध्यमिकाः (1) बाह्यार्थानुमेयत्वम्

(ख) योगाचाराः (2) सर्वशून्यत्वम्

(ग) सौत्रान्तिकाः (3) बाह्यार्थप्रत्यक्षत्वम्

(घ) वैभाषिकाः (4) बाह्यार्थशून्यत्वम्

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| (A) | (3) | (1) | (2) | (4) |
| (B) | (4) | (1) | (3) | (2) |
| (C) | (2) | (4) | (1) | (3) |
| (D) | (1) | (3) | (4) | (2) |

67. अधस्तनयुग्मानां समीचीनां तालिकां चिनुत-

(क) हर्षचरितम् (1) शूद्रकः

(ख) मुद्राराक्षसम् (2) दण्डी

(ग) दशकुमारचरितम् (3) विशाखदत्तः

(घ) मृच्छकटिकम् (4) बाणभट्टः

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| (A) | (4) | (3) | (2) | (1) |
| (B) | (3) | (2) | (1) | (4) |
| (C) | (2) | (4) | (3) | (1) |
| (D) | (1) | (2) | (4) | (3) |

68. अभिज्ञानशाकुन्तले शकुन्तलायाः प्रतिकूलदैवशमनार्थं कण्वः कुत्र गतः ? ह

(A) काशीतीर्थम् (B) प्रयागतीर्थम्

(C) काञ्चीतीर्थम् (D) सोमतीर्थम्

69. "उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी"- अभिज्ञानशाकुन्तले इयमुक्तिर्भवति-

(A) मारीचस्य (B) शारद्वतस्य

(C) कण्वस्य (D) शार्ङ्रवस्य

70. मेघदूते अस्याः नद्याः उल्लेखो नास्ति-

(A) तुङ्गभद्रा (B) रेवा

(C) गन्धवती (D) गम्भीरा

71. "सुलभेष्वर्थलाभेषु परसंवेदने जनः।
क इदं दुष्करं कुर्यादिदानीं शिविना विना।"
एषा उक्तिः कं लक्षयति?

(A) चाणक्यम् (B) राक्षसम्

(C) चन्दनदासम् (D) भागुरायणम्

72. मृच्छकटिके विदूषकस्य नाम भवति-

(A) आर्यकः (B) मैत्रेयः

(C) शर्विलकः (D) संस्थानकः

73. "निपीय यस्य क्षितिरक्षिणः कथास्तथाद्रियन्ते न बुधाः सुधामपि॥"- इति कस्य कथा अत्र उल्लिखिता?

(A) दुष्यन्तस्य (B) रघोः

(C) रामचन्द्रस्य (D) नलस्य

74. किरातार्जुनीयस्य प्रधानो रसोऽस्ति-

(A) शृंगारः (B) वीरः

(C) शान्तः (D) अद्भुतः

75. वेणीसंहारे दुर्योधनस्य कञ्चुकी भवति-

(A) विनयन्धरः (B) जयन्धरः

(C) रुधिरप्रियः (D) सुन्दरकः

76. "अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये।
उपलक्षणहेतुत्वादेषा....................॥"
साहित्यदर्पणानुसारतः रिक्तस्थानं पूरयत।

(A) लक्षण-लक्षणा (B) उपादानलक्षणा

(C) सारोपा लक्षणा (D) साध्यवसाना लक्षणा

77. अधस्तनयुग्मानां समीचीनतालिकां चिनुत-

| | |
|---|---|
| (क) आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम्। | (1) रत्नावली |
| (ख) अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम्। | (2) मुद्राराक्षसम् |
| (ग) गजेन्द्राश्च नरेन्द्राश्च प्रायः सीदन्ति दुःखिताः । | (3) अभिज्ञानशाकुन्तलम् |
| (घ) आनीय झटिति घटयति विधिरभिमतमभिमुखी भूतः । | (4) मृच्छकटिकम |

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| (A) | (2) | (3) | (1) | (1) |
| (B) | (3) | (4) | (2) | (1) |
| (C) | (4) | (2) | (2) | (3) |
| (D) | (1) | (2) | (3) | (4) |

78. "लोके हि लोहेभ्यः कठिनतराः खलु स्नेहमयाः बन्धनपाशाः "- इति हर्षचरिते कस्य मनसि समजायत?

(A) राज्यवर्धनस्य (B) प्रभाकरवर्धनस्य

(C) कुरज्लकस्य (D) हर्षवर्धनस्य

79. "श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्"- इति वार्ता केन सम्बद्धा?

(A) माघेन (B) भारविणा

(C) श्रीहर्षेण (D) कालिदासेनं

80. "स बाल आसीद् बपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभस्त्रिलोचनः।" - इति शिशुपालवधस्य पद्यांशः केन सम्बद्धः ?

(A) शिशुपालेन (B) श्रीकृष्णेन

(C) नारदेन (D) रावणेन

81. "वैदेहिबन्धोहृदयं विदद्रे"-रघुवंशस्य अस्मिन् पद्यांशे वैदेहिबन्धुः भवति-

(A) लक्ष्मणः (B) भरतः

(C) रामः (D) रघुः

82. काव्यमीमांसोक्तकथानुसारं पुरा पुत्रीयन्ती सरस्वती कुत्र तपस्यामास?

(A) विन्ध्यगिरौ (B) तुषारगिरौ

(C) सह्मगिरौ (D) मेरुगिरौ

83. जगन्नाथमते काव्यं कतिविधं भवति-

(A) द्विविधम् (B) त्रिविधम्

(C) चतुर्विधम् (D) पञ्चविधम्

84. "त्रयः समुदिताः, न तु व्यस्ताः" -इति काव्यप्रकाशे प्रथमे उल्लासे किम् अधिकृत्य उल्लिखितम्?

(A) काव्यलक्षणम् (B) काव्यभेदम्

(C) काव्यहेतुम् (D) काव्यफलम्

85. काव्यप्रकाशे उपमानोपमेययोः अभेदे अयमलङ्कारः भवति-

(A) रूपकम् (B) उपमा

(C) उत्प्रेक्षा (D) श्लेषः

86. आसु का नाट्यवृत्तिर्न भवति-

(A) अभिधा (B) आरभटी

(C) सात्त्वती (D) भारती

87. "भम धम्मिअ........" इत्यादिश्लोकः ध्वन्यालोके प्रथमे उद्योते अस्य उदाहरणं भवति-

(A) वाच्ये प्रतिषेधे विधिरूपस्य

(B) वाच्ये विधिरूपे प्रतिषेधरूपस्य

(C) वाच्ये विधिरूपेनुभयरूपस्य

(D) वाच्ये प्रतिषेधेऽनुभयरूपस्य

88. 'दशरूपकतः रिक्तस्थानं पूरयत-''

आनन्दनिस्यन्दिषुरूपकेषु व्युत्पत्तिमात्रं फ़लमल्पबुद्धिः ।

योऽपीतिहासादिवदाह साधुस्तस्मै नमः............ ॥''

(A) काव्यपराङ्मुखाय (B) नाट्यपराङ्मुखाय

(C) शास्त्रपराङ्मुखाय (D) स्वादुपराङ्मुखाय.

89. "कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम्"। - इत्युक्तिः एषु कस्मिन् अलङ्कारग्रन्थेऽस्ति-

(A) साहित्यदर्पणे (B) वक्रोक्तिजीविते

(C) रसगङ्गाधरे (D) काव्यप्रकाशे

90. एषु किं काण्डं रामायणे नास्ति?

(A) किष्किन्धाकाण्डमू (B) सीताकाण्डम्

(C) बालकाण्डम् (D) युद्धकाण्डम्

91. अस्य महापुराणेषु गणनं नास्ति-

(A) पद्मपुराणस्य (B) ब्रह्मपुराणस्य

(C) विष्णुपुराणस्य (D) आदित्यपुराणस्य

92. एषु किम् उपपुराणं न भवति?

(A) कूर्मपुराणम् (B) साम्बपुराणम्

(C) नृसिंहपुराणम् (D) एकाम्रपुराणम्

93. एषु किं पर्व महाभारते नास्ति-

(A) मौसलपर्व (B) कुन्तीपर्व

(C) शान्तिपर्व (D) उद्योगपर्व

94. कौटिलीयार्थशास्त्रे सर्वविद्यानां प्रदीपः सर्वकर्मणाम् उपायः, सर्वधर्माणामाश्रयः भवति-

(A) आन्वीक्षिकी (B) त्रयी

(C) वार्ता (D) दण्डनीतिः

95. मनुसंहितानुसारं राजः सचिवानां संख्या भवति-

(A) 10-12 (B) 7-8

(C) 3-4 (D) 5-6

96. "तमसा बहुरूपेण वेष्टिताः कर्महेतुना।

अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः॥"

इति मनुवचनं केन सम्बद्धम्?

(A) उदिभिदेन (B) अण्डजेन

(C) जरायुजेन (D) स्वेदजेन

97. श्रीमद्भगवद्गीतायां कर्मयोगः कतमोऽध्यायः?

(A) द्वितीयोध्यायः (B) तृतीयोध्यायः

(C) चतुर्थोध्यायः (D) पञ्चमोध्यायः

98. एपिग्रेफिया इंडिका इति पत्रिकायाः प्रकाशनं केन प्रारब्धम्।

(A) जेम्स प्रिंसेपमहोदयेन

(B) सर विलियमजोंसमहोदयेन

(C) जे. बर्जेसमहोदयेन

(D) कीलहार्नमहोदयेन

99. 'धम्मलिपि' नाम कस्य लेखेषु प्राप्यते?

(A) अशोकस्य (B) समुद्रगुप्तस्य

(C) खारवेलस्य (D) कनिष्कस्य

100. भारतवर्षे दानलेखानाम् उत्कीर्णनं बाहुल्येन कस्मिन् धातौ कृतम्?

(A) लौहधातौ (B) ताम्रधातौ

(C) रजतधातौ (D) स्वर्णधातौ

## नेट प्रश्नपत्र दिसम्बर- 2018

1 माण्डूकायनी शाखा कस्य वेदस्य विद्यते ।

(A) यजुर्वेदस्य (B) अथर्ववेदस्य

(C) ऋग्वेदस्य (D) सामवेदस्य

2. सांख्यरीत्या मोक्षप्राप्तिः कस्मादङ्गीक्रियते ।

(A) ज्ञानात् (B) धर्मातू

(C) ऐश्वर्यात् (D) वैराग्यात्

3. "खलु कृत्वा" निरुक्तानुसारं 'खलु' पदं विद्यते ।

(A) प्रतिषेधार्थे (B) पदपूरणार्थे

(C) समुच्चयार्थे (D) निश्चयार्थे

4. तर्कसङ्ग्रहदीपिकानुसारं 'तज्जन्यत्वे सति तज्जन्यजनकः' कः-

(A) हेतुः (B) परामर्शः

(C) व्यापारः (D) उपनयः

5. "व्रीहीनवहन्तीति कस्य विधेरुदाहरणम् अर्थसङ्ग्रहदिशा ।

(A) नियमविधेः (B) आर्थीपरिसङ्ख्याविधेः

(C) श्रौतीपरिसङ्ख्याविधेः (D) अपूर्वविधेः

6. ' मानवश्रौतसूत्रम्' केन वेदेन सह सम्बद्धम् विद्यते-

(A) ऋग्वेदेन (B) अथर्ववेदेन

(C) सामवेदेन (D) कृष्णयजुर्वेदिन

7. पुरुषस्यास्तित्वं साङख्यरीत्या कस्माद् हेतोः-

(A) त्रैगुण्यात् (B) अधिष्ठानात्

(C) भेदानां परिमाणात् (D) विषयत्वात्

8. शब्दनित्यत्वे वार्त्तिककृतः किं प्रमाणम्-

(A) सर्वे सर्वपदादेशाः दाक्षीपुत्रस्य पाणिनेः

(B) तदशिष्यं सज्ज्ञाप्रमाणत्वात्

(C) पृषोदरादीनि यथोपदिष्टम्

(D) सिद्धन्तु नित्यशब्दत्वात्

9. "अखण्डेषु कारणेषु फलावचः" इत्यनेन कस्यालङ्कारस्य लक्षणं प्रोक्तमाचार्यमम्मटेन ।

(A) सङ्रस्य (B) समासेक्तेः

(C) विभावनायाः (D) विशेषेक्तेः

10. 'अग्निष्टोमाख्यः' सोमयागः कदा अनुष्टीयते ।

(A) शरदि (B) वसन्ते

(C) ग्रीष्मे (D) प्रावृषि

11. 'सच्चिदानन्दाद्वयं ब्रह्म' इत्यादिना वेदान्तसारे किं लक्षितम् ।

(A) अवस्तु (B) वस्तु

(C) अज्ञानम् (D) अधिकारी

12. पाणिनीयशिक्षानुसारेण विसर्गस्य रूपपरिवर्तनं गतिः कतिविधं भवति ।

(A) सप्तविधम् (B) नवविधम्

(C) अष्टविधम् (D) त्रिविधम्

13. फललक्षणा निम्नलिखितासु लक्षणासु कस्याः पर्याया विद्यते ।

(A) गौणीलक्षणायाः (B) रूढिवतीलक्षणायाः

(C) प्रयोजनवतीलक्षणायाः (D) शुद्धालक्षणायाः

14. "कथाप्रसङ्गेषु मिथः सखीमुखात्तृणेऽपि तन्व्या नलनामनि श्रुते" अत्र नलपदस्यार्थोऽस्ति-

(A) शत्रु (B) नृपः

(C) अग्निः (D) तृणम्

15. साहित्यदर्पणानुसारं रसस्य किं विशेषणं न साधु ।

(A) लोकानुभूतिः (B) ब्रह्मस्वादसहोदरः

(C) अभिन्न (D) स्वप्रकाशः

16. "तस्मादकृतकं शास्त्रं स्मृतिं च सनिबन्धनाम् ।
आश्रित्यारभ्यते शिष्टैः शब्दानामनुशासनम्" ॥
वाक्यपदीयस्यास्यां कारिकायाम् 'अकृतकं शास्त्रम्' इति किम् ?

(A) ब्रह्मसूत्रम् (B) व्याकरणशास्त्रम्

(C) मीमांसाशास्त्रम् (D) अपौरुषेयं शास्त्रम्

17. 'तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकः' तर्कसङ्ग्रहे कः प्रोक्तः ।

(A) प्रागभावः (B) प्रध्वंसाभावः

(C) अन्योन्याभावः (D) अत्यन्ताभावः

18 "'सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः" उक्तिरियं कुत्र प्राप्यते-

(A) किरातार्जुनीये (B) रघुवंशे

(C) मेघदूते (D) मालविकाग्निमित्रे

19. कतिविधास्तुष्टयः साङ्ख्ये परिगणिताः?

(A) अष्टौ (B) सप्त

(C) नव (D) तिस्रः

20. 'शब्दज्ञानानुपाती वस्तुशून्यः' इति लक्षणलक्षिता चित्तवृत्तिः का योगदर्शनानुसारेण ?

(A) विपर्ययः (B) निद्रा

(C) प्रमाणम् (D) विकल्पः

21. 'ऋषीणां पुनराद्यानां वाचमर्थोनुधावति' उक्तिरियं कुत्र प्राप्यते ?

(A) हर्षचरिते (B) मालविकाग्निमित्रे

(C) उत्तररामचरिते (D) नैषधीयचरिते

22. 'राजन्तमध्वराणां गोपामृतस्य दीदिविम्' अत्र 'दीदिविम्' पदस्य कोर्थः ?

(A) इन्द्रम् (B) प्रकाशमानम्

(C) धुलोकम् (D) पुनर्जायमानम्

23. कस्माद् हेतोः प्रधानस्यानुपलब्धिः सांख्यरीत्या?

(A) समानाभिहारात् (B) सौक्ष्म्यात्

(C) अतिदूरात् (D) मनोऽनवस्थानात्

24. तर्कभाषारीत्या अभावात्मककार्यस्य कारणं कीदृशम्भवति?

(A) निमित्तकारणम् (B) असमवायिकारणम्

(C) समवाय्यसमवायिकारणम् (D) समवायिकारणम्

25. साहित्यदर्पणानुसारं रसास्वादने को हेतुः?

(A) काव्यपाठः (B) पात्राणि

(C) सहृदयता (D) सत्त्वोद्रेकः

26. जहदजहल्लक्षणाया वेदान्ते किमपरं नाम प्रयुक्तम्?

(A) भागलक्षणा (B) सारोपालक्षणा

(C) जहल्लक्षणा (D) अजहल्लक्षणा

27. अधोऽङ्कितेषु केन सह कस्य सम्बन्धः ? समुचितां तालिकां चिनुत-

(a) अयोगात्मकभाषा (1) संस्कृत भाषा

(b) श्लिष्टयोगात्मकभाषा (2) तुर्की

(c) प्रश्लिष्टयोगात्मकभाषा (3) तिब्बती भाषा

(d) अश्लिष्टयोगात्मकभाषा (4) चेरोकी

(A) (a)-(4), (b)-(3), (c)-(2), (d)-(1)

(B) (a)-(2), (b)-(1), (c)-(4), (d)-(3)

(C) (a)-(1), (b)-(2), (c)-(3), (d)-(4)

(D) (a)-(3), (b)-(1), (c)-(4), (d)-(2)

28. अजहत्स्वार्था लक्षणा का भवति?

(A) लक्षणलक्षणा (B) फललक्षणा

(C) उपादानलक्षणा (D) साध्यवसानिका

29. 'तपसा ब्रह्मचर्येण श्रद्धया विद्यया आत्मानम् अन्विष्यात्' इत्युक्तिः कस्याम् उपनिषदि प्राप्यते?

(A) केनोपनिषदि (B) श्वेताश्वतरोपनिषदि
(C) प्रश्नोपनिषदि (D) मुण्डकोपनिषदि

30. साङख्यदर्शनेन्तःकरणं किमात्मकम्?
(A) मनोबुद्धी एव (B) बुद्धिरेव
(C) बुद्ध्यहङ्कारमनांसि (D) बुद्ध्यहङ्कारावेव

31. 'रीतिरात्मा काव्यस्य' मतमिदं कस्य विद्यते?
(A) वामनस्य (B) रुद्रटस्य
(C) भामहस्य (D) रुय्यकस्य

32. ग्रिमनियमानुसारेण प्रथमवर्णपरिवर्तने तवर्गीयध्वनीनां कः परिवर्तनक्रमोस्ति?
(A) त-थ, द-त, ध-द (B) त-ध, द-त, ध-द
(C) त-द, द-थ, ध-द (D) त-थ, ध-त, द-थ

33. अधस्तनेषु किं मेलनं समुचितम्?
(A) आ मुक्तेः - आङ्मर्यादाभिविध्योः
(B) दम्पती - स्त्रियां संज्ञायाम्
(C) घृतगन्धि - वोपसर्जनात्
(D) मुहूर्तसुखम् - यस्य चायामः

34. 'मौद' शाखा केन वेदेन सह सम्बद्धा वर्तते?
(A) सामवेदेन (B) ऋग्वेदेन
(C) अथर्ववेदेन (D) कृष्णयजुर्वेदेन

35. "स्वच्छजलवत् सहसैव.....सर्वत्र विहितस्थितिः" इत्यादिना काव्यप्रकाशकृता को गुणो मतः?
(A) माधुर्यगुणः (B) समाधिगुणः
(C) ओजोगुणः (D) प्रसादगुणः

36. अधोङ्कितेषु समासप्रकरणानुसारं केन सह कस्य सम्बन्धः ? समुचितां तालिकां चिनुत-
(a) हंसौ (1) जातेश्च
(b) ब्राह्मणक्षत्रियविड्शूद्राः (2) पुमान् स्त्रिया
(c) शूद्रभार्यः (3) न निर्धारणे
(d) नृणां द्विजः श्रेष्ठः (4) वर्णानामानुपूर्व्येण
(A) (a)-(2), (b)-(4), (c)-(1), (d)-(3)
(B) (a)-(3), (b)-(4), (c)-(2), (d)-(1)
(C) (a)-(1), (b)-(4), (c)-(2), (d)-(3)
(D) (a)-(4), (b)-(1), (c)-(3), (d)-(2)

37. 'सारङ्गी' इत्यत्र स्त्रियां ङीष्-प्रत्यय-विधायकं किमस्ति सूत्रम् ?
(A) अन्यतो ङीष्
(B) वर्णादनुदात्तात् तोपधात्तो नः
(C) जातेरस्त्रीविषयादयोपधात्
(D) षिद्गौरादिभ्यश्च

38. 'तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि'- इत्युद्धरणं वर्तते-
(A) कठोपनिषदि (B) ईशोपनिषदि
(C) बृहदारण्यकोपनिषदि (D) तैत्तिरीयोपनिषदि

39. "सूर्य आत्मा जगतस्तस्थुषश्च" अस्य मन्त्रस्य द्रष्टा ऋषिः कः ?
(A) दीर्घतमा (B) मधुच्छन्दा
(C) वसिष्ठः (D) कुत्स अङ्गिरसः

40. वेदे 'सूनरी' कस्याः विशेषणम् ?
(A) उषसः (B) सरस्वत्याः
(C) अपालायाः (D) घोषायाः

41. 'नित्यज्ञानाधिकरणत्वम्' इति तर्कसङ्ग्रहदीपिकायां कस्य लक्षणं प्रोक्तम् ?
(A) मनसः (B) ईश्वरस्य
(C) परमाणोः (D) जीवात्मनः

42. निरुक्ते कति पदजातानि उपदिष्टानि ?
(A) त्रीणि (B) षट्
(C) चत्वारि (D) पञ्च

43. 'गौतमधर्मसूत्रम्' केन वेदेन सह सम्बद्धं विद्यते ?
(A) अथर्ववेदेन (B) कृष्णयजुर्वेदिन
(C) ऋग्वेदेन (D) सामवेदेन

44. महाभाष्ये व्याकरणस्य आनुषङ्गिकप्रयोजनेषु "विभक्तिं कुर्वन्ति" इत्यस्य क्रमोस्ति -
(A) सप्तमः (B) षष्ठः
(C) दशमः (D) पञ्चमः

45. मशककल्पसूत्रम्' कस्य वेदस्य वर्तते ?
(A) अथर्ववेदस्य (B) ऋग्वेदस्य
(C) सामवेदस्य (D) कृष्णयजुर्वेदस्य

46. भरतमुनिना रसस्य संख्या कियती स्वीकृता ?
(A) षट् (B) दश
(C) अष्टौ (D) नव

47. 'उभयप्राप्तौ कर्मणि' इति कारकसूत्रस्योदाहरणं किम् ?
(A) आश्चर्यो गवां दोहोगोपेन
(B) अधिकरणवाचिनश्च
(C) कृत्यानां कर्तरि वा
(D) कर्तृकर्मणोः कृति

48. 'बागर्थाविव' इत्यत्र कतमः समासः ?
(A) केवलसमासः (B) अव्ययीभावसमासः
(C) द्विगुसमासः (D) कर्मधारयसमासः

49. 'लोकेऽधिको हरिः' इत्यत्र सप्तमीविभक्तौ को नियमः ?
(A) यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी
(B) अधिरीश्वरे
(C) 'तदस्मिन्नधिकमिति दशान्ताड्डः' इति सूत्रनिर्देशात्
(D) सप्तमीपञ्चम्यौ कारकमध्ये

50. एध् धातोः लङ्लकारे उत्तमपुरुषबहुवचनस्य किं रूपं भवति ?
(A) एधामहि (B) ऐधेमहि
(C) एधामहे (D) ऐधामहि

51. "सत्या विशुद्धिस्तत्रोक्ता विद्यैवैकपदागमा"
वाक्यपदीयस्य अस्यां कारिकायां 'विद्दैवैकपदागमा' इत्यनेन पदेन किं स्वरूपा विद्या लक्ष्यते?
(A) अर्थरूपा (B) शब्दरूपा
(C) प्रणवरूपा (D) वर्णरूपा

52. अज्ञानस्य समष्ट्योपहितं चैतन्यं वेदान्ते किमुच्यते?
(A) प्राज्ञः (B) वैश्वानरः
(C) ईश्वर (D) विराट्

53. 'केवलाघो भवति केवलादी' अस्य मन्त्रस्य द्रष्टा कः ?
(A) कण्वः (B) गविष्ठिरः
(C) भिक्षुरङ्गिरसः (D) ब्रह्मा

54. साङ्ख्यदर्शने कैवल्यं कस्य मन्यते?
(A) अहङ्कारस्य (B) महतः
(C) पुरुषस्य (D) प्रधानस्य

55. 'रि च' इत्यनेन सूत्रेण किं कार्यं भवति ?
(A) उपधायाः दीर्घः रेफस्य च लोपः
(B) पूर्वस्वरस्य दीर्घः रादौ प्रत्यये परे
(C) रेफस्य लोपः रादौ प्रत्यये परे
(D) तासस्त्योः सस्य लोपः रादौ प्रत्यये परे

56. अधस्तनेषु उचितसम्बन्धयुतं विकल्पं चिनुत -
(A) वि मृळीकाय ते मनो रथीरश्वं न संदितम् - **इन्द्रसूक्तम्**
(B) ऋतस्य बुध्न उपसमिषण्यन् वृषा मही रोदसी आ विवेश- **वरुणसूक्तम्**
(C) यो रध्रस्य चोदिता यः कृशस्य यो ब्रह्मणो नाधमानस्य कीरेः - **अग्निसूक्तम्**
(D) यस्य व्रते पृथिवी नन्नमीति यस्य व्रते शफवज्जर्भुरीति- **पर्जन्यसूक्तम्**

57. काव्यस्यात्मा ध्वनिरिति सिद्धान्तः प्रधानतया केन प्रतिपादितः ?
(A) अभिनवगुप्तेन (B) भरतमुनिना
(C) मम्मटेन (D) आनन्दवर्धनेन

58. "अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः" रघुवंशे इयमुक्तिकस्य?
(A) कौत्सस्य (B) सिंहस्य
(C) वसिष्ठस्य (D) अरुन्धत्याः

59. कस्याम् उपनिषदि ' भृगुवल्ली ' उपदिष्टा?
(A) तैत्तिरीयोपनिषदि (B) केनोपनिषदि
(C) ऐतरेयोपनिषदि (D) बृहदारण्यकोपनिषदि

60. अधस्तनेषु किं मेलनं सत्यमस्ति -
(A) त्रिधा बद्धो वृषभो रोरवीति - सक्तुमिव
(B) म्लेच्छो ह वा एष यदपशब्दः - दुष्टः शब्दः
(C) प्रायश्चित्तीया मा भूमेत्यध्येयं व्याकरणम् - सारस्वतीम्
(D) न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम्- सुदेवोऽसि

61. अधोङ्कितेषु समुचित विकल्पं चिनुत -
(A) वैभाषिकाः - तत्र बोधात्मको जीवः । अबोधात्मस्त्वजीवः
(B) योगाचाराः - हीनयानम्
(C) माध्यमिकाः - महायानम्
(D) सौत्रान्तिकाः - तज्ज्ञानं पञ्चविधं मतिश्रुतावधिमनःपर्यायकेवलभेदेन

62. 'आग्निवेश्य-गृह्यसूक्तम्' कस्य वेदस्य वर्तते?
(A) कृष्णयजुर्वेदस्य (B) सामवेदस्य
(C) ऋग्वेदस्य (D) अआथर्ववेदस्य

63. अर्थशास्त्रस्य चतुर्थमधिकरणं वर्तते -
(A) धर्मस्थीयम् (B) षाड्गुण्यम्
(C) योगवृत्तम् (D) कण्टकशोधनम्

64. 'शोणो धावति' इत्युदाहरणे वेदान्तरीत्या का लक्षणा?
(A) जहल्लक्षणा (B) साध्यवसानालक्षणा
(C) अजहल्लक्षणा (D) भागलक्षणा

65. 'नीतिमञ्जरीप्रतिपाद्यविषयाः केन सम्बद्धाः ?
(A) अथर्ववेदेन (B) ऋग्वेदेन
(C) कृष्णयजुर्वेदेन (D) सामवेदेन

66. 'तं राजा प्रणयन् सम्यक् त्रिवर्गेणाभिवर्धते' अत्र त्रिवर्गस्याभिप्रायः कः ?
(A) ब्राह्मणः क्षत्रियः वैश्यश्च
(B) भूः भुवः स्वश्च
(C) साम दानं भेदश्च
(D) धर्मः अर्थः कामश्च

67. अर्थसङ्ग्रहरीत्या शाब्दीभावनाया लक्षणं किम् ?
(A) भवितुर्भवनानुकूलो भावकव्यापारविशेषः
(B) भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः
(C) प्रयोजनेच्छाजनितक्रियाविषयव्यापारः

(D) पुरुषप्रवृत्यनुकूलो भावयितुर्व्यापारविशेष:

**68. रुद्रदाम्न: गिरनारलेख: कस्यां भाषायां विद्यते ?**

(A) संस्कृतभाषायाम् (B) पालिभाषायाम्

(C) अपभ्रंशभाषायाम् (D) प्राकृतभाषायाम्

**69. 'वाग्मी' इत्यत्र को मत्वर्थीयप्रत्यय: ?**

(A) ग्मिनि (B) विनि

(C) मिनि (D) इनि

**70. "कथाप्रसङ्गेन जनैरुदाहृतादनुस्मृताखण्डलसूनुविक्रम:**

**तवाभिधानाद् व्यथते नताननःसुदुःसहान्मन्त्रपदादिवोरग :"॥**

**अत्र कोऽलंकार :?**

(A) लुप्तोपमा (B) मालोपमा

(C) श्लिष्टोपमा (D) उत्प्रेक्षा

**71.'तस्मादृच: साम यजूंषि दीक्षा' - पंक्तिरियं कुत्र प्राप्यते?**

(A) ऋग्वेदे (B)ईशोपनिषदि

(C) शुक्लयजुर्वेदे (D) मुण्डकोपनिषदि

**72. मनुस्मृतौ ' सर्वतेजोमयो हि सः ' अस्मिन् श्लोकांशे ' सः ' पदेन कः प्रोक्तः ?**

(A) सूर्य: (B) नृपः

(C) प्राज्ञः (D) गुरु:

**73. ऋग्वेदप्रातिशाख्ये कियन्ति समानाक्षराणि उक्तानि?**

(A) दश (B) पञ्चविंशति:

(C) चत्वारि (D) अष्टौ

**74. 'महदरण्यम्' इत्यर्थे स्त्रीप्रत्यये किं भवति?**

(A) अरण्या (B) अरण्यानी

(C) महारण्या (D) महारण्यानी

**75. तर्कसङ्ग्रहरीत्या मन: कीदृक् ?**

(A) एकमनित्यं परमाणुरूपञ्च

(B) अनन्तं परमाणुरूपं नित्यञ्च

(C) एकं विभु नित्यञ्च

(D) अनन्तं विभु नित्यञ्च

**76. शिशुपालवधस्य सर्गसंख्या काऽस्ति?**

(A) विंशतिः (B) एकविंशतिः

(C) सप्तविंशतिः (D) पञ्चविंशतिः

**77. 'मा नो वधाय हत्नवे जिहीळानस्य रीरधः।' अत्र स्तूयमानो देव: कः ?**

(A) रुद्र: (B) मित्र:

(C) वरुण: (D) अग्नि:

**78. काव्यमीमांसानुसारं काव्यकवि: कतिधा भवति?**

(A) चतुर्धा (B) त्रिधा

(C) पञ्चधा (D) अष्टधा

**79. जातिवाच्ये सति 'हस्त' शब्दस्य मत्वर्थीय: कः प्रयोग: ?**

(A) हस्तवान् (B) हस्ती

(C) हस्तालुः (D) हस्तिकः

**80. "बुध-युध-नश-जनेङ्-प्र-दु-स्रुभ्यो णे:" इति नियमेन शुद्धः प्रयोग: कः ?**

(A) बोधयति पद्मम् (B) योधयते काष्ठानि

(C) बोधयते पद्मम् (D) वेदमध्यापयते

**81. भाषाविज्ञानानुसारेण भारोपीयपरिवारस्य भाषा नास्ति?**

(A) मय (B) तोखारी

(C) इटालिक (D) आर्मीनी

**82. हर्षचरितं कति उच्छ्वासेषु विभक्तम् ?**

(A) सप्तसु (B) अष्टसु

(C) चतुर्षु (D) दशसु

**83. "शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेज:।**

**स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोऽभिभवाद्वमन्ति"॥**

**अत्र 'तत्' पदेन किं द्योतते?**

(A) शमः (B) तपः

(C) धनम् (D) तेज:

**84. तर्कसङ्ग्रहरीत्या आद्यास्यन्दनासमवायिकारणं किम्भवति?**

(A) द्रव्यत्व (B) द्रवत्वम्

(C) गुरुत्वम् (D) स्नेह:

**85. 'मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपु:' इत्येवं कस्य वैशिट्यं प्रतिपादितम्?**

(A) मृगयाया: (B) पर्यटनस्य

(C) तपश्चर्याया: (D) पादपसिञ्चनस्

**86. पण्डितराजजगन्नाथानुसारं निम्नलिखितेषु को न रसदोष:?**

(A) स्थायि-व्यभिचारिणां शब्दवाच्यत्वम्

(B) रसस्य व्यङ्ग्यत्वम्

(C) विच्छिन्नरसस्य पुनर्दीपनम्

(D) समबल-प्रबलप्रतिकूलरसाङ्गानां निबन्धनम्

**87. साध्यशून्य: पक्षो मुक्तावल्यां क उदाहृत:?**

(A) बाध: (B) व्याप्यत्वासिद्ध:

(C) सत्प्रतिपक्ष: (D) अनैकान्तिक

**88. याज्ञवल्क्यस्मृत्यनुसारं किं स्त्रीधनं नास्ति?**

(A) अध्यग्नि (B) आधिवेदनिकम्

(C) अन्वाधेयकम् (D) सामान्यार्थ:

**89. "अग्निष्टोमाख्ये" सोमयागे कति शस्त्राणि भवन्ति?**

(A) द्वादश (B) पञ्चदश

(C) एकादश (D) अष्

90. 'प्रतिहर्ता' ऋत्विक् कस्य गणस्य विद्यते-

(A) ब्रह्मगणस्य (B) उद्गातृगणस्य

(C) होतृगणस्य (D) अध्वर्युगणस्य

91. 'जन्माद्यस्य यतः' इत्यस्मिन् सूत्रे 'यतः' पदेन किमभिधीयते ?

(A) प्रकृतेः (B) जगतः

(C) ब्रह्मणः (D) सृष्टे

92. अधोऽङ्कितेषु केन सह कस्य सम्बन्धः ?

समुचितां तालिकां चिनुत-

(a) अचोन्त्यादि (1) प्रगृह्यम्

(b) इ इन्द्रः (2) उपधा

(c) कृत्तद्धितसमासाश्च (3) टि

(d) अन्त्यादलः पूर्वो वर्णः (4) प्रातिपदिकम्

(A) (a)-(1), (b)-(2), (c)-(3), (d)-(4)

(B) (a)-(4), (b)-(2), (c)-(3), (d)-(1)

(C) (a)-(2), (b)-(1), (c)-(3), (d)-(4)

(D) (a)-(3), (b)-(1), (c)-(4), (d)-(2)

93. 'सन्निहितसाधनादधिकस्यानुपादित्सा' इत्यनेन योगाङ्गियमेषु कः?

(A) सन्तोषः (B) ईश्वरप्राणिधानम्

(C) शौचम् (D) तपः

94. 'वेः शब्दकर्मणः' इति सूत्रस्योदाहरणम्भवति-

(A) चित्तं विकरोति कामः (B) स्वरान् विकुरुते

(C) शत्रुमधिकुरुते (D) छात्राः विकुर्वते

95. 'दण्डिक ' इत्यस्मिन् पदे कः तद्धितप्रत्ययः ?

(A) इक् (B) ठन्

(C) ठञ् (D) ठक्

96. 'मनसा हरि व्रजति' इत्यत्र 'गत्यर्थकर्मणि' इत्यादिसूत्रेण कर्मणि चतुर्थी कथन्न भवति?

(A) व्रजधातोः गत्यर्थाभावात्

(B) गत्यर्थकर्मणोभावात्

(C) अध्ववाचिकर्मत्वात्

(D) चेष्टायाः प्रतीत्यभावात्

97. "त्रयो धर्मस्कन्धा, यज्ञो अध्ययनं दानम् इति" इत्युक्तिः कस्याम् उपनिषदि लभ्यते?

(A) तैत्तिरीयोपनिषदि (B) छान्दोग्योपनिषदि

(C) बृहदारण्यकोपनिषदि (D) ऐतरेयोपनिषदि

98. अथर्ववेदीयकृषिसूक्तस्य द्रष्टा ऋषिः कः?

(A) मधुच्छन्दाः (B) भिक्षुः

(C) विश्वामित्रः (D) बुधः

99. अधोऽङ्कितेषु समुचितं विकल्पं चिनुत-

(A) जीवाजीवास्रवबन्धसम्वरनिर्जरमोक्षास्तत्त्वानि- सौत्रान्तिकाः

(B) भावनाभिभावितानि पञ्चभिः पञ्चधाक्रमात्, महाव्रतानि- व्यासभाष्यम्

(C) तत्र जीवा द्विविधाः संसारिणो मुक्ताश्च - आर्हताः

(D) स्यान्नास्ति चावक्तव्यः - वैभाषिकाः

100. योगदर्शने सर्वा चित्तभूमयः काः?

(A) निद्रा, तन्द्रा, प्रमादः, मोदः, दुःखम्

(B) क्षिप्तम्, मूढम्, विक्षिप्तम्, एकाग्रम्, निरुद्धम्

(C) क्षिप्तम्, प्रक्षिप्तम्, मूढम् , विमूढम्, सम्मूढम्

(D) स्मृति, विस्मृतिः, निरुद्धम्, एकाग्रम्, मोहः

## नेट प्रश्नपत्र जून-2019

1. अधोलिखितेषु केन्द्रवर्गे नास्ति ।

(A) जर्मनभाषा (B) रूसीभाषा

(C) फ्रेंचभाषा (D) ग्रीकभाषा

2. ऋग्वेदसंहितायाः पदपाठकारो निम्नलिखितेषु कोऽस्ति?

(A) गार्ग्यः (B) शाकल्यः

(C) शौनकः (D) यास्कः

3. "एध-वृद्धौ" इत्यस्माद् धातोः "ऐधिष्ट' इति रूपं निष्पद्यते-

(A) विधिलिङ्लकारे (B) लुङ्लकारे

(C) आशीर्लिङ्लकारे (D) लङ्लकारे

4. दर ऑन दि सब्लाइम (On The Sublime)ग्रन्थस्य प्रणेता वर्तते-

(A) अरस्तु (B) क्रोचे

(C) प्लेटो (D) लानजाइनस

5. सवितर्का समापत्तिः उच्यते-

(A) शब्दार्थज्ञानविकल्पैः सङ्कीर्णा

(B) स्वरूपशून्येवार्थमात्रनिर्भासा

(C) श्रुतानुमानप्रज्ञाभ्यामन्यविषया

(D) उक्तेपु त्रिषु न कापि

6. "प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्" पंक्तिरियं कस्याः विद्यायाःसन्दर्भेऽस्ति ।

(A) त्रय्याः (B) आन्वीक्षिक्याः

(C) वार्तायाः (D) दण्डनीतेः

7. "रुदति प्राव्राजीत्" अत्र रुदति पदे सप्तमी विभक्तिः अस्ति ।

(A) निर्धारण (B) सामीप्ये अधिकरणे

(C) अनादराधिक्ये भावलक्षणे (D) कर्मप्रवचनीयस्य योगे

8. अधस्तनानां केन अभिलेखेन सह कस्य सम्बन्धः? समीचीनां तालिकां चिनुत ।

| तालिका-1 | तालिका-2 |
|---|---|
| (a) रुद्रदाग् | (1) हाथीगुम्फा |
| (b) खारवेलस्य | (2) मन्दसौरः |
| (c) यशोधर्मणः | (3) ऐहोलः |
| (d) पुलकेशिनः | (4) गिरनारः |

(A) (a)-(4), (b)-(1), (c)-(2), (d)-(3)
(B) (a)-(1), (b)-(2), (c)-(3), (d)-(4)
(C) (a)-(4), (b)-(3), (c)-(2), (d)-(1)
(D) (a)-(3), (b)-(1), (c)-(4), (d)-(2)

9. पाणिनीयशिक्षायाम् अधमपाठकेषु को न परिगणितः?
(A) गीती (B) लिखितपाठकः
(C) पदानि विच्छिद्य पाठकः (D) शीघ्री

10. दुर्गेण कस्मिन् ग्रन्थे टीका लिखिता?
(A) वृहद्देवतायाम् (B) बौधायनगृह्यसूत्र
(C) कात्यायनशुल्बसूत्रे (D) निरुक्ते

11. पञ्चमहायज्ञेषु किं न गण्यते?
(A) देवयज्ञः (B) पितृयज्ञः
(C) ब्रह्मयज्ञः (D) विष्णुयज्ञः

12. "स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः।
त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः"॥
इत्यस्मिन् मंगलाचरणे ग्रन्थकारेण इष्टदेवस्य कस्य रसाभिव्यञ्जकस्वरूपस्य स्मरणं कृतम् ।
(A) शृंगाररसाभिव्यञ्जकस्य (B) वीररसाभिव्यञ्जकस्य
(C) शान्तरसाभिव्यञ्जकस्य (D) करुणरसाभिव्यञ्जकस्य

13. यशोधर्मणः मन्दसौर-स्तम्भलेखस्य लिपिरस्ति ।
(A) देवनागरी (B) ब्राह्मी
(C) खरोष्ठी (D) शारदा

14. कर्मकाण्डस्य प्रधानता कस्मिन् दर्शने प्रतिपाद्यते?
(A) न्यायदर्शने (B) चार्वाकदर्शने
(C) मीमांसादर्शने (D) योगदर्शने

15. "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" अत्र "जिजीविषेत्' पदस्य कोऽर्थः?
(A) जीवितुमिच्छेतु (B) जेतुमिच्छेत्
(C) ज्ञातुमिच्छेतु (D) प्राप्मिच्छेतू

16. महाभारतोपजीविकाव्यं नास्ति-
(A) बृहत्कथामंजरी (B) शिशुपालवधम्
(C) मध्यमव्यायोगः (D) भारतमंजरी

17. उदभिदा यजेत पशुकामः' इत्यत्र 'उदभिद्' शब्दो यागस्य नामधेयो भवति-
(A) मत्त्वर्थलक्षणाभयात् (B) वाक्यभेदभयात्
(C) तत्परख्यशास्त्रात् (D) तद्व्यपदेशात्द

18. चार्वाकदर्शनस्य कृते किम् अपरनाम प्रचलितमस्ति?
(A) ब्रह्मदर्शनम् (B) परलोकदर्शनम्
(C) ऐहलौकिकदर्शनम् (D) लोकायतदर्शनम्

19. अधस्तनेषु पुराणस्य पञ्चलक्षणेषु नास्ति ।
(A) वंशः (B) मन्वन्तराणि
(C) संसर्गः (D) प्रतिसर्गः

20. अधस्तनीयानां युग्मानां समीचीनां तालिकां चिनुत ।

| तालिका-1 | तालिका-2 |
|---|---|
| (a) पाणिनिः | (1) वृत्तिः |
| (b) कात्यायनः | (2) सूत्रम् |
| (c) पतञ्जलिः | (3) वार्तिकम् |
| (d) जयादित्यः | (4) इष्टिः |

(A) (a)-(1), (b)-(2), (c)-(3), (d)-(4)
(B) (a)-(1), (b)-(3), (c)-(2), (d)-(4)
(C) (a)-(3), (b)-(2), (c)-(4), (d)-(1)
(D) (a)-(2), (b)-(3), (c)-(4), (d)-(1)

21. "मालामतिक्रान्तः- 'अतिमालः' इत्यत्र समासविधायकं वर्तते ।
(A) कुगतिप्रादयः
(B) अत्यादयः कुष्टाद्यर्थे द्वितीयया
(C) अत्यादयः क्रान्त्यादयर्थे द्विवीयया
(D) एकविभक्ति चापूर्वनिपाते

22. निम्नलिखितभाष्यकारेषु कोऽर्वाचीनतमः?
(A) स्वामिदयानन्दः (B) रावणः
(C) उव्वटः (D) महीधरः

23. माध्यन्दिनशाखायाः अपरनाम किं प्रचलितमस्ति?
(A) कैथुमशाखा (B) बौधायनीशाखा
(C) वाजसनेयिशाखा (D) मैत्रायणीशाखा

24. प्र + एजते = 'प्रेजते' इत्यत्र एकारो भवति ।
(A) 'आदूगुणः' सूत्रेण गुणत्वात्
(B) 'वृद्धिरिचि' सूत्रेण वृद्धित्वात्
(C) 'एङि पररूपम्' सूत्रेण पररूपत्वात्
(D) 'एङः पदान्तादति' सूत्रेण पूर्वरूपत्वात्

25. चक्षुषा घटरूपत्वग्रहणे कः सन्निकर्षः।
(A) समवायः
(B) संयुक्तसमवायः

(C) संयुक्तसमवेतसमवाय:

(D) विशेषणविशेष्यभाव:

26. याज्ञवल्क्यस्मृतौ व्यवहाराध्याय: कतमोऽस्ति ।

(A) प्रथम: (B) द्वितीय:

(C) तृतीय: (D) चतुर्थ:

27. "कुरुचर:' इत्यत्र "चरेष्ट:" सूत्रेण 'ट' प्रत्ययो विधीयते--

(A) अधिकरणे उपपदे (B) कर्मण्युपपदे

(C) सुबन्ते उपपदे (D) उपसर्गे उपपदे

28. शब्दे व्याकरणे स्वीकारे महाभाष्ये का शङ्का नोत्थापिता ।

(A) ल्युडर्थस्य अनुपपन्नताया:

(B) "तत्र भव" इत्यस्य अनुपपन्नताया:

(C) प्रोक्तादीनां तद्धितार्थानाम् अनुपपन्नताया:

(D) षष्ठ्यर्थस्य अनुपपन्नताया:

29. ऋग्वेदे वरुणसूक्तस्य (1.2) ऋषि: क:?

(A) शुन:शेप: (B) मधुच्छन्दा:

(C) हिरण्यस्तूप: (D) गौतम:

30. अधस्तनेषु "ध्वन्यते इति ध्वनि:" इत्यनेन कोऽभिप्राय:?

(A) व्यञ्जशब्दार्थौ (B) व्यञ्जनाशक्ति:

(C) व्यङ्ग्यार्थ: (D) व्यङ्ग्यकाव्यम्

31. निम्नलिखितेषु ऋग्वेदस्य प्राचीनतमो भाष्यकार: कोऽस्ति?

(A) वेङ्कटमाधव: (B) सायण:

(C) उव्वट: (D) स्कन्दस्वामी

32. "दीर्घाज्जसि च' इत्यनेन भवति ।

(A) पूर्वसवर्णदीर्ष: (B)पूर्वसवर्णदीर्षस्य निषेध:

(C) वृद्धि: एकादेश: (D) गुणादेशस्याभाव:

33 पुराणसन्दर्भे सप्तद्वीपेषु गणना नास्ति ।

(A) कुशद्वीप: (B) प्लक्षद्वीप:

(C) शाकद्वीप: (D) आम्रद्वीप:

34. ऋक्प्रातिशाख्यानुसारं समानाक्षराणां का संख्या?

(A) षड् (B) अष्टौ

(C) पञ्च (D) सप्त

35. 'सर्पिषो नाथनम्' इह षष्टी विभक्तिर्भवति ।

(A) कर्मण: शेषत्वेन विवक्षायाम्

(B) करणस्य शेषत्वेन विवक्षायाम्

(C) सम्बन्धस्य सम्बन्धत्वेन विवक्षायाम्

(D) अधिकरणस्य शेषत्वेन विवक्षायाम्

36. अलङ्कारसम्प्रदायस्य प्रवर्तकाचार्य: क:?

(A) वामन: (B) भरत:

(C) भामह: (D) रुद्रट:

37. कौटिलीय- अर्थशास्त्रं कति अधिकरणेषु विभक्तमस्ति ?

(A) अष्टादशाधिकरणेषु

(B) द्वादशाधिकरणेषु

(C) दशाधिकरणेषु

(D) पञ्चदशाधिकरणेषु

38. "कौटिल्यमते कृषिपाशुपाल्ये वाणिज्या" इति विषया: सन्ति ।

(A) त्रय्या: (B) दण्डनीते:

(C) वार्ताया: (D) आन्वीक्षक्या:

39. काव्यप्रकाशस्य कस्मिनुल्लासे व्यञ्जनाया: स्थापना अभवत् ।

(A) सप्तमोल्लासे (B) अष्टमोल्लासे

(C) पञ्चमोल्लासे (D) प्रथमोल्लासे

40. बौद्धदर्शने पञ्चविधस्कन्धेषु परिगणितो नास्ति-

(A) विज्ञानम् (B) वेदना

(C) संज्ञा (D) विशेषणम्

41. तर्कसंग्रहानुसारं पदार्था: कति सन्ति?

(A) सप्त (B) षोडश

(C) नव (D) दश

42. अनुमितिज्ञाने व्यापार उच्यते ।

(A) करणम् (B) परामर्श:

(C) व्याप्ति: (D) हेतु:

43. अधोलिखितेषु अर्थविस्तारस्योदाहरणं नास्ति-

(A) गवेषणा (B) तैलम्

(C) प्रवीण: (D) श्राद्ध:

44. कस्य वच: नारिकेलफलसम्मित कल्पितम्?

(A) विशाखदत्तस्य (B) भारवे:

(C) दण्डिन: (D) बाणभट्टस्य

45. निम्नलिखितेषु कतमं ब्राह्मणं सामवेदीयं नास्ति?

(A) ताण्ड्यब्राह्मणम् (B) शतपथब्राह्मणम्

(C) षड्-विंशब्राह्मणम् (D) छान्दोग्यब्राह्मणम्

46. 'सत्यं वृहद्दतमुग्रं दीक्षातपो ब्रह्मयज्ञ: पृथिवीं धारयन्ति' मन्त्रांशोऽयं कस्मिन् वेदे विद्यते?

(A) ऋग्वेदे (B) यजुर्वेदे

(C) सामवेदे (D) अथर्ववेदे

47. अधोऽङ्कितेषु योगदर्शनानुसारेण समुचित: क्रमोऽस्ति-

(A) अस्तेय-अपरिग्रह-सत्य-ब्रह्मचर्य-अहिंसा:

(B) अपरिग्रह-ब्रह्मचर्य-सत्य-अस्तेय-अहिंसा:

(C) अहिंसा-सत्य-अस्तेय-ब्रह्मचर्य-अपरिग्रहा:

(D) सत्य-अहिंसा-अस्तेय-ब्रह्मचर्य-अपरिग्रहा:

48. निम्नलिखितेषु दर्शनेषु किं दर्शन परमात्मन: सृष्टिकर्तृत्वं न

मन्यते?

(A) आर्हतदर्शनम्  (B) न्यायदर्शनम्

(C) वेदान्तदर्शनम्  (D) योगदर्शनम्

49. कुन्तकानुसारम् अधस्तनेषु सुकुमारमार्गस्य प्रथमो गुणः वर्तते-

(A) माधुर्यम्  (B) सौन्दर्यम्

(C) स्वाभाविकम्  (D) लावण्यम्

50. भावनायां लिङ्गादिज्ञानं करणं भवति-

(A) भावनोत्पादकत्वेन

(B) शब्दभावनानिवर्तकत्वेन

(C) आर्थीभावनोत्पादकत्वेन

(D) शब्दभावनाभाव्यनिर्वर्तकत्वेन

51. अधस्तनानां महाभारतीयपर्वणां समुचितः क्रमोऽस्ति-

(A) शान्तपर्व, स्त्रीपर्व, अनुशासनपर्व, आश्वमेधिकपर्व

(B) स्त्रीपर्व, शान्तिपर्व, अनुशासनपर्व, आश्वमेधिकपर्व

(C) अनुशासनपर्व, स्त्रीपर्व, आश्वमेधिकपर्व, शान्तिपर्व

(D) आश्वमेधिकपर्व, अनुशासनपर्व, स्त्रीपर्व, शान्तिपर्व

52. मनुस्मृतिः कति अध्यायेषु विभक्ताऽस्ति-

(A) दशाध्यायेषु  (B) एकादशाध्यायेषु

(C) त्रयोदशाध्यायेषु  (D) द्वादशाध्यायेषु

53. कौषीतकिब्राह्मणं केन वेदेन सम्बद्धमस्ति?

(A) शुक्लयजुर्वेदेन  (B) कृष्णयजुर्वेदेन

(C) ऋग्वेदेन  (D) सामवेदिनहि

54. आर्हतदर्शने चतुर्विधवन्धेषु परिगणितो नास्ति-

(A) प्रकृतिबन्धः  (B) विषयबन्धः

(C) स्थितिबन्धः  (D) प्रदेशबन्धः

55. आकृतिमूलकवर्गीकरणे हिन्दीभाषा मन्यते-

(A) प्रश्लिष्ट-बहिर्मुखी

(B) प्लिष्टबहिर्मुखी वियोगात्मिका

(C) श्लिष्टबहिर्मुखी संयोगात्मिका

(D) श्लिष्टान्तरमुखी वियोगात्मिका

56. अधोलिखितेषु उपन्यासकारं चिनुत ।

(A) बाणभट्टः  (B) बिल्हणः

(C) दण्डी  (D) अम्बिकादत्तव्यासः

57. "न वञ्चनीयाः प्रभवोऽनुजीविभिः" इति केनोक्तम्?

(A) विशाखदत्ते  (B) दण्डिना

(C) भासेन  (D) भारविणा

58. ग्रिमनियमानुसारेण तवर्गीयध्वनीनां परिवर्तनक्रमोस्ति-

(A) द>ध, ध>थ, थ>त

(B) त>थ, द>ध, ध>त

(C) थ>ध, त>द, ध>द

(D) त>थ, ध>द, द>त

59. शारिपुत्रप्रकरणमस्ति-

(A) माघप्रणीतम्  (B) श्रीहर्षप्रणीतम्

(C) अश्वघोषप्रणीतम्  (D) बिल्हणप्रणीतम्

60 विश्वनाथकविराजेन प्रतिपादितं काव्यस्वरूपं किम?

(A) रीतिरात्मा काव्यस्य

(B) वाक्य रसात्मकं काव्यम्

(C) रमणीयार्थप्रतिपादकः शब्दो काव्यम्

(D) कान्यस्यात्मा ध्वनिः

61. वेदान्तसारमतेन कर्मेन्द्रियाणामुत्पत्तिः भवति-

(A) आकाशादीनां रजोंऽशेभ्यः समस्तेभ्यः

(B) आकाशादीनां रजोंऽशेभ्यो व्यस्तेभ्यः

(C) आकाशादीनां सत्त्वांऽशेभ्यो व्यस्तेभ्यः

(D) आकाशादीनां सत्त्वांशेभ्यो समस्तेभ्यः

62. मनुमते अनारोग्यमनायुष्यमस्वर्ग्य चाऽस्ति?

(A) अविद्या  (B) अतिभोजनम्

(C) उच्छिष्टभोजनम्  (D) अवशिष्टभोजनम्

63. "षड् भावविकारा भवन्ति" मतमिदं कस्य विद्यते?

(A) वार्ष्यायणे  (B) शाकपूणेः

(C) शाकटायनस्य  (D) यास्कस्य

64. निम्नलिखितेषु केन ज्योतिश्शास्त्रमाधृत्य ऋग्वेदस्य कालो निर्धारितः?

(A) बालगंगाधरतिलकमहोदयेन

(B) मैक्डानलमहोदयेन

(C) वेबरमहोदयेन

(D) विल्सनमहोदयेन

65. तर्कभाषानुसारम् इन्द्रियार्थसन्निकर्षः कस्य कारणम्?

(A) अनुमानस्य  (B) प्रत्यक्षस्य

(C) उपमानस्य  (D) इन्द्रियस्य

66. दर्शयज्ञः कस्यां तिथौ क्रियते?

(A) पौर्णमास्याम्  (B) अमावस्याम्

(C) अष्टम्याम्  (D) चतुर्दश्याम्

67. त्रिविक्रमभट्टप्रणीतं चम्पूकाव्यमस्ति-

(A) नलचम्पू  (B) राजचम्पू

(C) रामायणचम्पू  (D) जीवन्धरचम्पू

68. "श्लोकवार्तिकम्" कस्य दर्शनस्य ग्रन्थोऽस्ति?

(A) मीमांसादर्शनस्य  (B) वेदान्तदर्शनस्य

(C) न्यायदर्शनस्य  (D) सांख्यदर्शनस्य

69. अधस्तनयुग्मानां समीचीनमेलनतालिकां चिनुत-

| तालिका-1 | तालिका-2 |
|---|---|
| (a) भारविः | (1) बुद्धचरितम् |
| (b) कालिदासः | (2) रघुवंशम् |
| (c) अश्वघोषः | (3) किरातार्जुनीयम् |
| (d) शूद्रकः | (4) मृच्छकटिकम् |

(A) (a)-(3), (b)-(2), (c)-(1), (d)-(4)
(B) (a)-(2), (b)-(1), (c)-(4), (d)-(3)
(C) (a)-(1), (b)-(2), (c)-(3), (d)-(4)
(D) (a)-(4), (b)-(3), (c)-(2), (d)-(1)

70. सत्कार्यवादस्य समर्थने हेतुर्नास्ति-
(A) असदकरणम् (B) सर्वसम्भवाभावः
(C) शक्तस्य शक्यकरणम् (D) सर्वसम्भव-भावः

71. 'भवाति' रूपमिदं कस्य लकारस्य विद्यते?
(A) लोट्लकारस्य (B) विधिलिङ्लकारस्य
(C) लेट्लकारस्य (D) लुट्लकारस्य

72. मुद्राराक्षसस्य तृतीयाङ्कस्य नाम अस्ति-
(A) मुद्राप्रापतिः (B) भूषणविक्रयः
(C) प्रलोभनम् (D) कृतककलहः

73. अरस्तूविरचितं पुस्तकमस्ति-
(A) दि रिपब्लिक [The Republic]
(B) आन द सब्लाइम [On The Sublime]
(C) पॉएटिक्स [Poetics]
(D) टेल आफ़ टू सिटीज़ [Tale of two cities]

74. पाणिनीयशिक्षानुसारं कस्य प्राणिनः ध्वनिः एकमात्रिकवर्णतुल्यः भवति ।
(A) नकुलस्य (B) शिखिनः
(C) वायसस्य (D) चाषस्य

75. मनुस्मृत्यनुसारं कति पाकयज्ञाः ।
(A) चत्वारः (B) षट्
(C) पञ्च (D) दश

76. अधोलिखितेषु वैदिकभाषादृशा साधुप्रयोगो मन्यते-
(A) देवेभिः (B) विश्वा
(C) एमसि (D)उक्ताःसर्वेऽपिसाधवः

77. सारनाथ-बौद्धप्रतिमालेखस्य भाषाऽस्ति-
(A) संस्कृतम् (B) प्राकृतम्
(C) पालिः (D) अपभ्रंशः

78. "काण्वशतपथब्राह्मणम्" केन वेदेन सम्बद्धम् अस्ति?
(A) ऋग्वेदेन (B) अथर्ववेदेन
(C) यजुर्वेदेन (D) सामवेदेन

79. "यस्य हलः" इत्यत्र 'यस्य' इत्यनेन ग्रहणं भवति-
(A) केवल यकारस्य
(B) अकारसहितं यकारस्य
(C) यत् प्रातिपदिकेन निष्पन्नस्य षष्ठ्यन्तस्य
(D) उक्तेषु न कस्यापि

80. अधोलिखितेषु भर्तृहरिमतेन ध्वनेः भेदद्वयं चिनुत ।
(A) पश्यन्ती, वैखरी (B) प्राकृतः, वैखरी
(C) प्राकृतः, वैकृतः (D) वैखरी, वैकृतः

81. अशोकस्य शाहबाजगढी- अभिलेखः कुत्र प्राप्यते-
(A) जूनागढ़-गुजरातप्रान्ते
(B) पेशावर-पाकिस्तानदेशे
(C) गुर्जरा-मध्यप्रदेशे
(D) भाबू-राजस्थानप्रदेशे

82. अधोलिखितेषु का वैदिकभाषायाः विशेषता नास्ति-
(A) सानुनासिकस्वराणां प्रयोगः
(B) "लेट" लकारस्य प्रयोगः
(C) तुमुन्नर्थे तवैप्रत्ययस्य प्रयोगः
(D) क्त्वार्थे तवेङ्प्रत्ययस्य प्रयोगः

83. अधोलिखितेषु वेदान्तमते असमीचीनं कथन चिनुत-
(A) काम्यकर्माणि स्वर्गादिसाधनानि
(B) निषिद्धानि कर्माणि अनिष्टसाधनानि
(C) नित्यानि कर्माणि अनिष्ठसाधनानि
(D) नैमित्तिकानि प्रायश्चित्तादीनि कर्माणि पापक्षयादिसाधनानि

84. वानीरकुञ्जोड्डीनशकुनि कोलाहलं शृण्वन्त्याः।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥
काव्यप्रकाशानुसारम् उपर्युक्तमुदाहरणं कस्य?
(A) काक्वाक्षिप्तगुणीभुतव्यंग्यस्य
(B) असुन्दरगुणीभूतव्यंग्यस्य
(C) अस्फुटगुणीभूतव्यंग्यस्य
(D) सन्दिग्धप्राधान्यगुणीभूतव्यंग्यस्य

85. 'यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत्' मन्त्रांशोऽयं कस्य सूक्तस्य विद्यते?
(A) सूर्यसूक्तस्य (B) वरुणसूक्तस्य
(C) अग्निसूक्तस्य (D) इन्द्रसूक्तस्य

86. "यं ब्राह्मणमियं देवी वाग्वश्येवानुवर्तते" इति केन उद्घोषितम् ।
(A) भवभूतिना (B) भासेन
(C) माघेन (D) भट्टनारायणेन

87. जीवाजीवाख्ये द्वे तत्वे कस्मिन् दर्शने मन्येते?

(A) बौद्धदर्शने (B) सांख्यदर्शने
(C) वेदान्तदर्शने (D) जैनदर्शने

88. 'अल्पक्लेशं मरणं दारिद्रामनन्तकं दुःखमिति' केनोक्तम्?
(A) बाणभट्टेन (B) माघेन
(C) शूद्रकेण (D) भारविणा

89. अशोकस्य शाहबाजगढीलेखः कस्यां लिप्यां प्राप्यते-
(A) ब्राह्मी (B) खरोष्टी
(C) शारदा (D) पुष्करी

90. निम्नलिखितेषु को हेत्वाभासो नास्ति?
(A) असिद्धः (B) विरुद्धः
(C) अनैकान्तिकः (D) असत्प्रतिपक्षः

91. बाष्कलशाखा कस्य वेदस्य विद्यते?
(A) ऋग्वेदस्य (B) सामवेदस्य
(C) यजुर्वेदस्य (D) अथर्ववेदस्य

92. "नमो अरिहंतानं। नमो सवसिधानं। ऐरेण महाराजेन ..."। इति वाक्य कस्मिन्नभिलेखे प्राप्यते?
(A) इलाहावाद-लेखे (B) ऐहोल-शिलालेखे
(C) गिरनार-लेखे (D) हाथीगुम्फा-लेखे

93. अधोलिखितेषु खकारस्य बाह्यप्रयत्नविषयकम् उपयुक्ततमं विकल्पं चिनुत ।
(A) विवारः, श्वासः अघोषः, अल्पप्राणः
(B). संवारः, नादः, घोषः, अल्पप्राणः
(C) विवारः, श्वासः अघोषः, महाप्राणः
(D) संवारः, नादः, घोषः, महाप्राणः

94. "न हि रसादृते कश्चिदर्थः प्रवर्तते" इति केनोक्तम्?
(A) भामहेन् (B) भरतेन
(C) विश्वनाथेन (D) मम्मटेन

95. अभिनिहितस्वरितो भेदोऽस्ति-
(A) आश्रितस्वरितस्य (B) जात्यस्वरितस्य
(C) तैरोविरामस्वरितस्य (D) स्वतन्त्रस्वरितस्य

96. अधस्तनयुग्मानां वाल्मीकिरामायणस्योपजीविग्रन्थेषु केन सह कस्य सम्बन्धः? समुचितां तालिकां चिनुत ।

| तालिका-1 | तालिका-2 |
|---|---|
| (a) रामायणमञ्जरी | (1) विलोमकाव्यम् |
| (b) यादवराघवीयम् | (2) चित्रकाव्यम् |
| (c) अनर्घराघवम् | (3) महाकाव्यम् |
| (d) रामलीलामृतम् | (4) नाटकम् |

(A) (a)-(3), (b)-(1), (c)-(4), (d)-(2),
(B) (a)-(3), (b)-(4), (c)-(1), (d)-(2),
(C) (a)-(2), (b)-(4), (c)-(3), (d)-(1),
(D) (a)-(4), (b)-(2), (c)-(1), (d)-(3),

97. "विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान्"। इति कस्य ग्रन्थस्य वचनमस्ति-
(A) मनुस्मृत्याः (B) याज्ञवल्क्यस्मृत्याः
(C) पाराशरस्मृत्याः (D) नारदस्मृत्याः

98. वेदान्तदर्शनानुसारं जगतः प्रपञ्चः किं कथ्यते?
(A) ईश्वरस्व स्वरूपम् (B) अनन्तसत्ता
(C) अनादितत्त्वम् (D) विवर्तः

99. अधस्तनेषु वाल्मीकि रामायणस्य काण्डानां समुचितक्रमोऽस्ति-
(A) बाल-अयोध्या-सुन्दर-अरण्य-किष्किन्धा-युद्ध-उत्तराणि
(B) बाल-अयोध्या-किष्किन्धा-अरण्य-सुन्दर-युद्ध-उत्तराणि
(C) अयोध्या-बाल- किष्किन्धा-अरण्य-सुन्दर-युद्ध-उत्तराणि
(D) बाल-अयोध्या-अरण्य-किष्किन्धा-सुन्दर- युद्ध -उत्तराणि

100. 'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।' इत्यत्र - "अल्पविषया मतिः" इति कस्य कृते प्रयुक्तम्?
(A) विशाखदत्तस्य (B) भासस्य
(C) कालिदासस्य (D) बाणभट्टस्य

## नेट प्रश्नपत्र दिसम्बर-2019

1. कथनद्वयम् अधोलिखितम् - तत्र एकम् अभिकथनम् (A) अपरश्च तस्य कारणम् (R) इति ।
**अभिकथनम् (A) :** एकनवतिवर्षीयस्य प्रणवस्य प्रपौत्रः ओङ्कारः। ओङ्कारस्य युवापत्यसञ्ज्ञा भवति ।
**कारणम् (R)-** 'जीवति तु वंश्ये युवा' इति विधानात् ।
उपर्युक्तम् अभिकथन कारणमाश्रित्य समुचितं विकल्पं चिनुत
(A) (A) तथा (R) उभयं सत्यमस्ति । (A) इत्यस्य (R) उचित कारणमस्ति ।
(B) (A) तथा (R) उभावपि असमीचीनौ
(C) (A) तथा (R) उभावपि समीचीनौ, परं (A) इत्यस्य (R) इति समुचितं कारणं नास्ति।
(D) (A) इति असमीचीनं परं (R) इति समीचीनम्

2. कल्पसाहित्ये गण्येते-
(a) गौतमधर्मसूत्रम्
(b) वाजसनेयिप्रातिशाख्यम्
(c) मानवशुल्बसूत्रम्
(d) निघण्टुः
अधोलिखितेषु समुचितमुत्तरं चिनुत-
(A) (a) एवं (b) (B) (c) एवं (d)

(C) (a) एवं (c) (D) (b) एवं (d)

3. निम्नाङ्कितेषु समुचितः सम्बन्धो वर्तते-
(a) हर्षस्य वांसखेडा - ताम्र अभिलेखः
(b) पुलकेशिन द्वितीयस्य - मन्दसौर-अभिलेखः
(c) यशोधर्मणः - इलाहाबाद - अभिलेखः
(d) रुद्रदाम्नः - गिरनार - अभिलेखः
अधस्तनेषु समीचीनं विकल्पं चिनुत-
(A) (a) एवं (b) (C) (b) एवं (c)
(C) (c) एवं (d) (D) (a) एवं (d)

4. रथाङ्गपाणेः पटलेन रोचिषामृषित्विषःसंवलिताविरेजिरे।
चलत्पलाशान्तरगोचरास्तरोस्तुषारमूर्तेरिव नक्तमंशवः।।
- अस्मिन् श्लोके 'तुषारमूर्ति' इति शब्दः कस्य वाचकः ?
(A) सूर्यस्य (B) चन्द्रस्य
(C) श्रीकृष्णस्य (D) रथस्य

5. सायणभाष्यग्वेदसंहितां सम्पाद्य तस्याः प्रकाशनकार्यं प्रथमं केन वैदेशिकेन कृतमस्ति ?
(A) मोक्षमूलरेण (B) वेबरेण
(C) जैकोबी महोदयेन (D) विण्टरनित्समहोदयेन

6. वेदान्तसारानुसारं 'तत्त्वमसि' इत्यत्र अखण्डार्थबोधक-सम्बन्धः कतिविधः ?
(A) चतुर्विधः (B) त्रिविधः
(C) द्विविधः (D) पञ्चविधः

7. अधस्तनेषु चित्तभूमिषु न गण्येते-
(a) चलम् (b) मूढम्
(c) विक्षिप्तम् (d) अचलम्
समुचितं विकल्पं चिनुत-
(A) (a) एवं (e) (B) (a) एवं (d)
(C) (c) एवं (d) (D) (b) एवं (c)

8. ऋग्वेदसंहिताया वैशिष्ट्यमस्ति-
(A) यज्ञवर्णनम् (B) देवस्तुतिः
(C) स्मार्तकार्यम् (D) वास्तुनिर्देशः

9. रामायणस्य बालकाण्डस्य स्गानुसारम् उपाख्यानानां समुचितः क्रमोऽस्ति
(A) शुनःशेपाख्यानम्, ऋष्यशृङ्गाख्यानम्, क्रौञ्चवधाख्यानम्, अहिल्योद्धाराख्यानम्
(B) क्रौञ्चवधाख्यानम्, ऋष्यशृङ्गाख्यानम्, अहिल्योद्धाराख्यानम्, शुनःशेपाख्यानम्
(C) क्रौञ्चवधाख्यानम्, शुनःशेपाख्यानम्, अहिल्योद्धाराख्यानम् ऋष्यशृङ्गाख्यानम्
(D) ऋष्यशृङ्गाख्यानम्, शुनःशेपाख्यानम्, अहिल्योद्धाराख्यानम्, क्रौञ्चवधाख्यानम्

10. यथा हिरण्यं शुचिधातुमध्ये मेरुर्गिरीणां सरसां समुद्रः।
तारा सचन्द्रस्तपतां च सूर्यः पुत्रस्तथा ते द्विपदेषु वर्यः।।
श्लोकेऽस्मिन् कस्य पुत्रस्य वर्णनमस्ति-
(A) दशरथस्य (B) दुष्यन्तस्य
(8) दुर्योधनस्य (D) शुद्धोदनस्य

11. पुरुरवा उर्वशीसंवादसूक्ते कियन्तो मन्त्राः सन्ति ?
(A) एकादश (B) पञ्चदश
(C) सप्तदश (D) अष्टादश

12. अधोऽङ्कितेषु केन सह कस्य सम्बन्धः ?
(a) माध्यमिकाः (i) बाह्यार्थशून्यम्
(b) योगाचाराः (ii) वाह्यार्थप्रत्यक्षम्
(c) सौत्रान्तिकाः (iii) सर्वं शून्यम्
(d) वैभाषिकाः (iv) बाह्यार्थानुमेयम्
समुचितं विकल्पं चिनुत-
(A) (a)-(ii), (b)-(i), (c)-(iv), (d)-(i)
(B) (a)-(i), (b)-(ii), (c)-(iii), (d)-(iv)
(C) (a)-(iv), (b)-(iii), (c)-(ii), (d)-(i)
(D) (a)-(iii), (b)-(ii), (c)-(iv), (d)-(i)

13. 'अग्निना रयिमश्नवत्पोषमेव दिवे दिवे' इत्यस्मिन्मत्रांशे (रयिः) पदस्य अर्थम् निर्दिशतु -
(a) रात्रिः (b) रत्नम्
(c) धनम् (d) वसु
अत्र उचितमुत्तरं चिनुत-
(A) (a) एवं (b) (B) (c) एवं (d)
(C) (b) एवं (c) (D) (a) एवं (d)

14. अधोऽङ्कितानां केन सह कस्य सम्बन्धः ?
(a) प्रत्यक्षमेव प्रमाणम् (i) जैनाः
(b) सप्तभङ्गिनयः (ii) साङ्ख्यदर्शनम्
(c) हेत्वाभासाः (iii) चार्वाकाः
(d) सत्कार्यवादः (iv) नैयायिकाः
अत्र समुचितां विकल्पं चिनुत -
(A) (a)-(iv). (b)-(i). (c)-(iii). (d)-(ii)
(B) (a)-(iii), (b)-(i). (c)-(iv), (d)-(ii)
(C) (a) (ii), (b) (iv), (c) (iii),(d) (i)
(D) (a)-(i), (b)-(iii), (c)-(ii), (d)-(iv)

15.'यत्समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यं तदसमवायिकारणम्/ यथा-तन्तुसंयोगः पटस्यासमवायिकारणम्। तन्तुसंयोगस्य गुणस्य पटसमवायिकारणे षु तन्तुषु गुणिषु समवेतत्वेन समवायिकारणे प्रत्यासन्नत्वात्। अनन्यवासिद्धनियतपूर्वभावित्वेन पटं प्रति कारणत्वाच्च। इति सिद्धान्तानुसारेण 'तन्तुसंयोगः पटस्य कीदृशं कारणम् भवति ?
(A) असमवायिकारणम् (B) समवायिकारणम्
(C) संयोगकारणम् (D) निमित्तकारणम्

16. मनुस्मृतिकारेण 'नारा' इति शब्देन किं गृहीतम् ?

(A) आपः (B) मनुष्यः
(C) पशुः (D) पक्षी

17. चत्वारो वेदाः जगति प्रसिद्धाः सान्ति। एते ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदश्च। एतेषां मन्त्राणामर्थख्यापनाय बहवः आचार्याः प्रयत्नं कृतवन्तः। तत्रग्वेदस्य प्रथमो भाष्यकारः स्कन्दस्वामी आसीत्। विस्तारपूर्वकं यज्ञपद्धतेः प्रथमं भाष्यं आचार्यसायणेन कृतम्। स एव कृष्णवजुर्वेदस्य भाष्यं प्रथमतया विरचितवान्। आनन्दतीर्थः , दवानन्दश्च बेदभाष्यं रचितवन्तौ।

उपर्युक्तेषु ऋग्वेदस्य प्रथमभाष्यकारः क आसीत् ?
(A) सायणः (B) स्कन्दस्वामी
(C) आनन्दतीर्थः (D) दयानन्दः

18. अधस्तनेषु वेदान्तानुसारं षट्कसम्पत्तिषु गण्येते
(a) श्रवणम् (b) मननम्
(c) श्रद्धा (d) समाधानम्
समुचितं विकल्पं चिनुत-
(A) (a) एवं (d) (B) (b) एवं (c)
(C) (c) एवं (d) (D) (c) एवं (a)

19. महाकविकालिदासस्य प्रसिद्धौ कस्यालङ्कारस्योदाहरणरूपेण उपयोगः क्रियते -
(A) उपमालङ्कारस्य
(B) उत्प्रेक्षालङ्कारस्य
(C) समासोक्त्यलङ्कारस्य
(D) अतिशयोक्त्यलङ्कारस्य

20. गगनारविन्दं सुरभि, अरविन्दत्वात्, सरोजारविन्दवत्' इत्यत्र तर्कभाषानुसारं कतमो हेत्वाभासः ?
(A) स्वरूपासिद्धः (B) विरुद्धः
(C) आश्रयासिद्धः (D) व्याप्यत्वासिद्धः

21. अलोऽन्त्यात् पूर्वर्णस्य का सञ्ज्ञा भवति ?
(A) निष्ठा (B) उपधा
(C) गति (D) संहिता

22. अत्र द्वौ कथनांशी स्तः -
(a) : पशुपादप्रकृतिः प्रभागपादः
(b) : पशुः चतुष्पाद्युक्ता भवन्ति। तेषामियं प्रकृतिर्भवति। अतः छन्दस्सु चत्वारः पादा भवन्ति। पद्यो चत्वारः पादाः छन्दनिरूपणे गण्यन्ते।
एतेषु-उचितमुत्तरं लिखत् -
(A) (a) तथा (b) उभये सत्यकथने, (b) (a) अंशस्य उचितमुदाहरणम् ।
(B) (a) कथनं सत्यम् (b) कथनं तथा न निर्दिशति (a) स्वरूपम्।
(C) (a) कथनमसत्यम् (b) कथनं सत्यमस्ति
(D) (a) सत्यमस्ति (b) परिभाषां न प्रस्तौति

23. छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुनिरुक्तं श्रोत्रमुच्यते।।
अत्र श्लोके केषां वर्णनं प्राप्यते-
(A) आरण्यकानाम् (B) उपनिषदाम्
(C) वेदाङ्गानाम् (D) वेदानाम्

24. साङ्ख्यदर्शनानुसारं पञ्चविंशतित्वेषु गणना नास्ति-
(A) रसस्य (B) पुद्गलस्य
(C) श्रोत्रस्य (D) जलस्य

25. 'पैलः' इति पदं विद्यते
(a) गणविशेषस्यादिमः शब्दः (b) पैले भवा
(c) पीलाया गोत्रापत्यम् (d) पैलस्य इयम्
अधोलिखितेषु समुचितं विकल्पं चिनुत -
(A) (a) एवं (b) (B) (c) एवं (d)
(C) (a) एवं (c) (D) (b) एवं (d)

26. नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
दैवीं सरस्वतीं चैव ततो जयमुदीरयेत्।।
उपर्युक्तश्लोकेन सम्बन्धोऽस्ति
(A) वाल्मीकिरामायणस्य
(B) महाभारतस्य
(C) जयपुराणस्य
(D) भारतविजयस्य

27. अनुकरणसिद्धान्तस्य समर्थकः मुख्यतया अस्ति
(A) अरस्तू (B) लॉञ्जाइनस
(C) क्रोचे (D) प्लेटो

28. 'गो + अग्रम् इत्यत्र न सम्भवति
(A) प्रकृतिभावः (B) पूर्वरूपम्
(C) अवङादेशः (D)संहिताया अभावः

29. 'मृगाक्षी' - शब्दे विद्यमानः 'मृग' इति शब्दः उदाहरणं विद्यते
(A) अर्थादेशस्य
(B) अर्थविस्तारस्य
(C) अर्थसङ्कोचस्य
(D) अर्थागमस्य

30. न तेन सज्यं क्वचिदुद्यतं धनुः,
कृतं न वा तेन विजिह्ममानम्।
गुणानुरागेण शिरोभिरुह्यते
नराधिपैर्माल्यमिवास्य शासनम्।।
अस्मिन् श्लोके प्रशंसा वर्तते
(A) युधिष्ठिरस्य (B) वनेचरस्य
(C) दुर्योधनस्य (D) अर्जुनस्य

31. दर्श नु विश्वदर्शतं दर्श रथमधि क्षमि।
एता जुषत मे गिरः।।

उपर्युक्तमन्त्रे 'गिरः' पदस्य अर्थं स्तः -

(a) पर्वतः (b) गिरिः

(c) वाणी (d) स्तुतिः

**अत्र समीचीनमुक्तरं चिनुत -**

(A) (b) एवं (c) (B) (a) एवं (b)

(C) (c) एवं (d) (D) (b) एवं (d)

32. **सर्वप्राचीनरचनायाः प्राथम्येन कालक्रमानुसारमुचितमुक्तरं चिनुत-**

(a) बुद्धचरितम् (b) नैषधीयचरितम्

(c) स्वप्नवासवदत्तम् (d) मुद्राराक्षसम्

**एशु क्रमं चिनुत**

(A) (a) (d) (b) (c)

(B) (d) (c) (a) (b)

(C) (c) (b) (a) (d)

(D) (c) (a) (d) (b)

33. **यजुर्वेदसंहितायां प्राधान्येन निरूपणं प्राप्यते**

(A) संवादस्य (B) यज्ञानाम्

(C) गानानाम् (D) दार्शनिकविचाराणाम्

34. **अधोलिखितेषु केन सह कस्य सम्बन्धः ?**

(a) भट्टोजिदीक्षितः (i) काशिका

(b) नरेन्द्राचार्यः (ii) शब्दकौस्तुभः

(c) वामनः (iii) लघुमञ्जूषा

(d) नागेशः (iv) सारस्वतव्याकरणम्

**समुचितं विकल्पं चिनुत -**

(A) (a)-(iv), (b)-(i), (c)-(), (d)-(ii)

(B) (a)-(i), (b)-(iv), (c)-(iii). (d)-(ii)

(C) (a)-(iii), (b)-(ii), (c)-(i), (d)-(iv)

(D) (a)-(ii), (b)-(iv), (c)-(i), (d)-(iii)

35. **याज्ञवल्क्यस्मृतेरनुसारं लिखितं भुक्तिः साक्षिणश्चेति ' किम्**

(A) प्रमाणम् (B) प्रकरणम्

(C) अनुमानम् (D) साधनम्

36. **मनुस्मृतेः टीकाकाराणां केन सह कस्य सम्बन्धः -**

(a) गोविन्दराजः (i) मनुभाष्यम्

(b) कुल्लूकभट्टः (ii) मन्वाशयानुसारिणी-मनुटीका

(c) सर्वज्ञनारायणः (iii) मन्वर्थमुक्तावली

(d) मेधातिथिः (iv) मन्वर्थविवृत्ति

**अधस्तनेषु समीचीनं विकल्पं चिनुत**

(A) (a)-(iii), (b)-(i), (c)-(ii), (d)-(iv)

(B) (a)-(ii), (b)-(iii), (c)-(iv), (d)-(i)

(C) (a)-(iv), (b)-(ii), (c)-(i), (d)-(iii)

(D) (a)-(i), (b)-(iv), (c)-(iii), (d)-(ii)

37. **'प्रत्यर्थम्' इत्यत्र अव्ययीभाव समासो विद्यते**

(A) योग्यतार्थे (B) वीप्सार्थे

(C) पदार्थानतिवृत्यर्थे (D) सादृश्यार्थे

38. **'काव्यं ग्राह्यमलङ्कारात्' इत्युक्ति अस्ति**

(A) दण्डिनः (B) वामनस्य

(C) अभिनवगुप्तस्य (D) भोजस्य

39. **याज्ञवल्क्यस्मृतेः व्यवहाराध्याये प्रकरणानां समुचितं क्रमोऽस्ति -**

(A) ऋणादान - उपनिधि - साक्षि - लेख्य - दिव्य - सीमाविवाद - दायविभागप्रकरणम्

(B) दिव्य - लेख्य - साक्षि - उपनिधि - ऋणादान – सीमाविवाद - दायविभागप्रकरणम्

(C) ऋणादान - उपनिचि - साक्षि - लेख्य - दिव्य – दायविभाग - सीमाविवादप्रकरणम्

(D) साक्षि - लेख्य - दिव्य - उपनिधि - ऋणादान – सीमाविवाद - दायविभागप्रकरणम्

40. **अधस्तनयुग्मानां समीचीनां तालिकां चिनुत -**

(a) हर्षः (i) मुद्राराक्षसम्

(b) भवभूतिः (ii) कर्णभारम्

(c) विशाखदतः (iii) उत्तररामचरितम्

(d) भासः (iv) रत्नावली

**एषु समीचीनमुत्तरं चिनुत -**

(A) (a)-(iii), (b)-(ii), (c)-(iv), (d)-(i)

(B) (a)-(iv), (b)-(iii), (c)-(i), (d)-(ii)

(C) (a)-(ii), (b)-(i), (c)-(ii), (d)-(iv)

(D) (a)-(i), (b)-(iv), (c)-(ii), (d)-(iii)

41. **याज्ञवल्क्यमते उत्तरा क्रिया कुत्र बलवतीभवति ?**

(A) सर्वेष्वर्थविवादेषु

(B) आधी प्रतिग्रहे

(C) सर्वेषु भूमिविवादेषु

(D) दायविभागविवादेशु

42. **'सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी' - अत्र 'सः' पदस्य क आशयः**

(A) शब्दः (B) व्यंग्यः

(C) लक्ष्यः (D) वाच्यः

43. **पाणिनीयशिक्षानुसारं लृकारस्य भेदाः सम्भवन्ति -**

(A) ह्रस्वदीर्घो (B) दीर्घप्लुतौ

(C) ह्रस्वप्लुतौ (D) ह्रस्वदीर्घप्लुताः

44. **ध्वन्यालोके प्रतीयमानस्य तृतीयः प्रभेदः कः ?**

(A) अलङ्कारादिः (B) गुणादिः

(C) रसादिः (D) वृत्यादिः

45. **मनुस्मृत्यनुसातं समुचित्रमल्ति -**

(A) आचार्यो ब्रह्मणो मूर्तिः

(B) आचार्यो गृर्तिः प्रजापते।

(C) आचार्यो मूर्तिरात्मनः

(D) आचार्यः पृथिव्या मूर्तिः

46. 'अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः।
कालात्ययापदिष्टश्च हेत्वाभासस्तु पञ्चधा।।
इत कस्य दार्शनिकस्य कथनमस्ति ?

(A) विश्वनाथपञ्चाननस्य

(B) अन्नभट्टस्य

(C) सदानन्दस्य

(D) केशवमिश्रस्य

47. बौद्धदर्शनानुसारं चतुर्णाम् आर्यसत्यानाम् उचितः क्रमोऽस्ति।

(A) दुःखम्, समुदायः, निरोधः, मार्गः

(B) मार्गः, निरोधः, निरोध्धः, समुदायः

(C) समुदायः, दुःखम्, मार्ग, सिरोच।

(D) निरोधः, मार्गः, दुखम्, समुदाय

48. ब्राह्मचर्य भूमौ शय्या जटाऽजिनधारणमग्निहोत्राभिषेकौ देवतापित्रकौ देवतापित्रतिथिपूथा वन्यश्याहारः इति कौटिलीयमते कस्य धर्मोऽस्ति ?

(A) ब्रह्मचारिणः (B) गृहस्यस्य

(C) वानप्रस्थ (D) परिव्राजकस्य

49. भोजप्रवन्धानुसारं शिलालेख-लिपिवाचमं कथ्यते -

(A) लिपिपरीक्षा (B) शिलाप्रीक्षा

(C) जतुपरीक्षा (D) पाण्डुपरीक्षा

50. ऋवेदस्य वरुणसूक्ते कियन्तो मन्त्राः सन्ति ?

(A) दश (B) द्वादश

(C) एकविंशतिः (D) द्वाविशतिः

51. कथनद्वयमधोलिखितम्-एकम् अभिकथनम् (A) अपरश्च कारणम् (R)

अभिकथनम् (A):साङ्ख्यकारिकायां पुरषस्य सत्ता स्वीक्रियते।

कारणम् (R): सङ्घातपरार्थत्वात्।

अत्र समुचितमुत्तरं चिनुत -

(A) (A) असत्यम् (R) सत्यम्

(B) (A) तथा (R) उभे सत्ये स्तः

(C) (A) तथा (R) उभे असत्ये स्तः

(D) (A) सत्यम् (R) असत्यम्

52. महाभारताश्रितं भासविरचितं नाटकमस्ति -

(a) दूतवाक्यम्

(b) प्रतिमानराटकम्

(c) मध्यमव्यायोगम्

(d) बालभारतम्

अधस्तनेषु समीचीनं विकल्पं चिनुत -

(A) (a) एवं (b) (B) (b) एवं (d)

(C) (a) एवं (c) (D) (b) एवं (c)

53. अधोलिखितेषु केन सह करग सम्न-भः ?

| | |
|---|---|
| (a) आख्यातम् | (i) अदः |
| (b) नाम | (ii) भवति |
| (c) निपातः | (iii) परि |
| (d) उपसर्गः | (iv) नु |

समुचितां तालिकां चिनुत -

(A) (a)- (iii), (b)-(ii), (c)-(i). (d)-iv)

(B) (a)- (i), (b)-(iii), (c)-(ii), (d)-(iv)

(C) (a)- (iv). (b)- (iii). (c)-(i). (d)-(ii)

(D) (a)- (ii), (b)-(i), (c)-(iv), (d)-(iii)

54. तैतिरीयब्राह्मणस्य प्रथमे काण्डे के द्वे वर्णिते -

(a) उपहोमः (b) अग्निहोत्रम

(c) अग्न्याधानम् (d) गवामयनम्

अथोलिखितेषु समुषितमुतरं थिमुत -

(A) (b) एवं (c) (B) (a) एवं (d)

(C) (c) एवं (d) (D) (a) एवं (b)

55. अधोलिखितेषु केन सह कस्य सम्बन्धः ?

| | |
|---|---|
| (a) द्यूतक्रीडा | (i) भीष्मपर्व |
| (b) गीता-उपदेशः | (ii) महाप्रस्थानिकपर्व |
| (c) अभिमन्यु-वधः | (iii) सभापर्व |
| (d) पाण्डवानां हिमालययात्रा | (iv) द्रोणपर्व |

समुचितं विकल्पं चिनुत -

(A) (a)-(i), (b)-( iv), (c)-(iii), (d)-(ii)

(B) (a)-(iii), (b) (i), (c) (iv), (d)-(ii)

(C) (a)-(iv), (b)-(ii), (c)-(ii), (d) (1)

(D) (a)-(ii). (b). G). (c) (iv). (d)-ii)

56. रामायणाश्रितं रचनाद्वयं किमस्ति ?

(A) मालविकानिमित्म, रत्मावली

(B) प्रतिमनाटकम्, वेणीसंहारम्

(C) उत्तररामचरितम्, महावीरचरितम्

(D) मालविकात्रिमित्रम्, स्वनवासवदतम्

57. क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष 'ईश्वरः' इति कथनमस्ति -

(A) साख्यदर्शने (B) योगदर्शने

(C) मीमांसादर्शने (D) वैशेषिकदर्शने

58. आर्हतदर्शनानुसारं सप्तभङ्गी नयः कुत्र न स्वीकृतोऽस्ति ?
स्यादस्ति च नास्ति च

(A) स्यादस्ति च नास्ति च

(B) स्यादस्ति च नास्ति चावक्तव्यः

(C) स्यादस्ति च वक्तव्यः

(D) स्यान्नास्ति चावक्तव्यः

59. हरी + एतौ इत्यत्र भवतः-

(a) यण् संन्धिः (b) पररूपम्
(c) प्रगृह्यसञ्ज्ञा (d) प्रकृतिभावः
अधोलिखितेषु समुचितं विकल्पं चिनुत -
(A) (a) एवं (b) (B) (b) एवं (c)
(C) (c) एवं (d) (D) (a) एवं (d)

60. नाट्यशास्त्रे विश्वकर्मणा प्रेक्षागृहस्य त्रैविध्ये वर्णितम् -
(a) विकृष्टम् (b) त्र्यस्रम्
(c) चतुरस्रम् (d) अष्टास्रम्
उपर्युक्तेषु समीचीनमुत्रं चिनुत
(A) (a) एवं (b) (B) (a) एवं (d)
(C) (b) एवं (d) (D) (e) एवं (d)

61.पाणिनीयशिक्षानुसारं शम्भुमते मताः वर्णाः सन्ति -
(a) 61 (b) 62
(c) 63 (d) 64
अधोलिखितेषु समुचितं विकल्पं चिमुत -
(A) (a) एवं (b) (B) (b) एवं (c)
(C) (c) एवं (d) (D) (a) एवं (d)

62. निरुक्तकारेण केन क्रमेण पदजातानि वर्षितानि ?
(i) आख्यातम् (ii) उपसर्गाः
(iii) निपाताः (iv) नाम
अत्र कः क्रमः ? स्पष्टयत
(A) (iv), (i), (ii). (iii)
(B) (iii), (ii), (i), (iv)
(C) (ii), (i), (iii), (iv)
(D) (iii), (ii). (iv), (i)

63. अधोऽङ्कितेषु योगसूत्रानुसारं योगाङ्गेषु गण्येते -
(a) स्वाध्यायः (b) निरुद्धम्
(c) प्रत्यक्षम् (d) समाधिः
समुचितं विकल्पं चिनुत -
(A) (a) एवं (d) (B) (a) एवं (b)
(C) (a) एवं (c) (D) (b) एवं (d)

64. "काव्यप्रकाशे विशेषवपुरपदार्थोऽपि वाक्यार्थः"
अत्र के उच्यते
(A) तात्पर्यार्थः (B) लक्ष्यार्थः
(C) व्यंग्यार्थः (D) अननन्वितार्थः

65. अधस्तनेषु केन सह करय साबन्धः ?
(a) शिक्षा (i) पादव्यवस्था
(b) कल्पः (ii) शाब्दानुशासनम्
(c) व्याकरणम् (iii) यज्ञविधागविमर्श
(d) छन्दः (iv) वर्णस्वरमात्रादिविमर्शः
समुचितां तालिकां चितुत
(A) (a)-(1), (b)-(iii), (c)-(ii), (d)-(iv)
(B) (a)-(iv), (b)-(iii), (c)-(ii), (d)-i)
(C) (a)-(i), (b)- (iii), (c)-(iv), (d)-(ii)
(D) (a)-(i). (b)- (ıv) (c)- (iii). (d)-(ii)

66. 'इन्द्रियार्थयोस्तु यः सन्निकर्षः साक्षात्कारिप्रमाहेतुः ? स कतिविधः ?
(A) सप्तविधः (B) चतुर्विधः
(C) षडविधः (D) पञ्चविधः

67. दीप्त्या च धैर्येण च यो रराज बालो रविर्भूमिमिवावतीर्णः ।
तथातिदीप्तोऽपि निरीक्ष्यमाणो जहार चक्षूंषि यथा शशाङ्कः ।
श्लोकेस्मिन् किं छन्दः कश्चात्र अलङ्कारः ?
(A) मालिनीवृतम्, परिकरालङ्कारः
(B) आर्यावृत्तम्, उत्प्रेक्षालङ्कारः
(C) उपजातिवृत्तम्, उपमालङ्कारः
(D) वंशस्थवृत्तम्, रूपकालङ्कारः

68. 'यस्य शुष्पाद्रोदसी अभ्यसेताम्' अस्मिन् मन्त्रांशे 'शुष्मात्' पदस्य अर्थो निर्भार्यताम् -
(a) बलात् (b) पूजनात्
(c) पराक्रमात् (d) शस्त्रात्
अत्रोचितमुत्तरं थिनुत -
(A) (a) एवं (b) (B) (c) एवं (d)
(C) (a) एवं (d) (D) (a) एवं (c)

69. भर्तृहरेः कृती इमे :-
(a) दीपिका (b) प्रदीप
(c) घोतनम् (d) वाक्यपदीयम्
अधोलिखितेषु समुचितं विकल्पं थिनुत
(A) (a) एवं (b) (B) (b) एवं (c)
(C) (a) एवं (d) (D) (b) एवं (d)

70. भाषाणां 'सतम्' वर्गे स्वीक्रियते
(A) लैटिन (B) ग्रीक्
(C) संस्कृतम् (D) फ्रेंच

71.अशोकस्य गिरनार-अभिलेखानां सन्दर्भे समुचितं कथनमस्ति -
(a) अभिलेखानां भाषा संस्कृतमस्ति।
(b) अभिलेखानां भाषा प्राकृतम् (पालिः) अस्ति।
(c) अभिलेखानां लिपिः देवनागरी अस्ति।
(d) अभिलेखानां लिपिः ब्राह्मी अस्ति।
अथस्तनेषु समीचीनं विकल्पं चिनुत
(A) (a) एवं (b) (B) (b) एवं (c)
(C) (c) एवं (d) (D) (b) एवं (d)

72. शुक्लयजुर्वेदसंहितायाः कतमोऽध्याय ईशोपनिषद्
(A) विंशतितमः (B) षोडशतमः
(C) चत्वारिंशत्तमः (D) एकोनविंशतितमः

